प्रकाशक—
युधिष्ठिर मीमांसक
बहालगढ़ (सोनीपत-हरयाणा)

प्राप्तिस्थान—
रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)

प्रथम संस्करण ५००
सं० २०४१; सन् १९८४
बढ़िया जिल्द ४०-००
विना जिल्द ३४-००

मुद्रक—
शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस
बहालगढ़ (सोनीपत-हरयाणा)





# प्रकाशकीयम्

श्रौतपदार्थानां 'कश्चिदपूर्वपरिचयात्मकोऽज्ञातकर्तृकः **श्रौतपदार्थ-निर्वचन'** नामा ग्रन्थो बहुवर्षेभ्यः प्राक् त्रिः प्रचकाश । तस्य प्रथमं मुद्रणं वाराणस्याः 'क्वींसकालेज' (संस्कृतमहाविद्यालय) नाम्न्याः संस्थातस्तदानीं प्रकाश्यमाणे पण्डितपत्रे ऽनेकैर्ग्रन्थैः सह धाराप्रवाहरूपेण प्रकाशितो बभूव । ततः संकलय्यास्य प्रथमं मुद्रणं कदा केन प्रकाशितमिति नास्माभिर्ज्ञायिते (नास्माभिरिदं संस्करणमुपलब्धम्) । द्वितीयं संस्करणं वाराणस्याः 'ई० जे० लाजरस एण्ड कम्पनी' इत्याख्यया संस्थया १९१९ तमे ख्रैस्ताब्दे प्रकाशितमभूत् । इदमपि संस्करणं त्रिंशद्वर्षेभ्य प्रागेव दुर्लभतां गतम् ।

अस्य ग्रन्थस्यादावन्ते मुखपृष्ठे च ग्रन्थकर्तुर्नाम नोपलभ्यते । द्वितीयसंस्करणस्य मुखपृष्ठतो ज्ञायते यदस्य प्रथमं संशोधनं श्रीविश्वनाथशास्त्रिणाऽकारि, द्वितीयसंस्करणस्य संशोधनं श्रीप्रभुदत्तशास्त्रिणा व्यधायि ।

'ई० जे० लाजरस एण्ड कम्पनी' संस्थया प्रकाशितं द्वितीयं संस्करणम् अशुद्धिबहुलं वर्तते । बहुत्र पाठभ्रंशोऽपि दृश्यते । अस्माभिः पण्डितपत्रे प्रकाशितेन अस्मत्सकाशे वर्तमानेन मध्ये मध्ये ऽन्ते च खण्डितेन ग्रन्थेन यथाशक्यं सम्मेल्य संस्करणमिदं प्रकाशितम् । चिरन्तनकालादस्वस्थेन मया विशिष्टमत्र किमपि सम्पादनकार्यं नाकारि । यतो ह्ययं ग्रन्थो बहुभ्यो वर्षेभ्यो विदुषां कृते श्रौतपदार्थजिज्ञासूनां च कृते दुर्लभमभूद् अत एतस्य दुर्लभतां परिहारायैव प्रयत्नोऽयं मयाऽकारि ।

ग्रन्थकर्त्रा ग्रन्थोऽयं यद्यपि बौधायनश्रौतसूत्रं प्रधान्येनावलम्ब्य विरचितम्, तथापि समग्रस्य बौधायनसूत्रस्यानुपलब्ध्या (द्र० पृष्ठ १४८, पं० १८) ग्रन्थकारेण बहुत्रापस्तम्बसूत्रानुसारेण प्रयोगो निर्दिष्टः (यथा—पृष्ठ १६८, पं० २५; पृष्ठ १६९, पं० १७) । आश्वलायनसूत्रम् अमरकोशश्च बहुत्र ग्रन्थकृतोद्धृतौ । बौधायनसूत्रसम्बद्धा गोपालकारिकाऽप्यत्रोद्धृता दृश्यते ।

एतस्मिन् ग्रन्थे अनेकाष्टिप्पण्यः पूर्वसंस्करणस्था विद्यन्ते ऽनेकाश्च मयाऽस्मिन् संस्करणे नियोजिताः । बहुत्र पूर्वसंस्करणे टिप्पण्यामुद्धृतानां वचनानामाकरग्रन्थस्योल्लेखो नासीत् । अस्माभिस्तस्य नाम्नो यथास्थनं योजनाऽकारि (द्र० पृष्ठ ७३, टि० २, अग्रे च बहुत्र) ।

अस्मिन् ग्रन्थे बहुत्र चतुर्होतृप्रभृतिमन्त्राणां विनियोगस्तु विहितः, परन्तु तत्र तत्र ते मन्त्रा न निर्दिष्टाः। अस्माभिर्ग्रन्थाध्येतॄणां सौकर्याय तेषां पाठो ऽग्रे प्रदर्श्यते।

अत्र केवलं कार्यद्वयमेव मयाऽकारि। १-ग्रन्थकर्त्रा निरुच्यमानस्य पदार्थस्य नाम विवरणान्ते लिखितम्, मया पाठकानां सौविध्याय तन्नाम तत्तत्स्थाने आदावपि स्थूलाक्षरेषु प्रत्तम्। २—बहुत्र लम्बायमानानां सन्दर्भाणां यथाशक्यं विच्छेदं कृत्वा ऽत्र मुद्रणं विहितम्। ग्रन्थ उद्धृतानां मन्त्राणां स्थूलाक्षरेषु मुद्रणमपि प्रारब्धम्, किन्त्वग्रे मन्त्रपाठानामाधिक्यात् स्थूलमुद्रणाक्षराणामल्पताकारणात् परित्यक्तम्, केवलं मन्त्राणामादावन्ते च ‘ ’ निर्देशो ऽकारि। अतिशयास्वस्थताकारणान्मया मुद्रणपत्राणां शोधनमपि न कृतम्।

अस्मिन् पूर्वमुद्रिते ग्रन्थे प्राचीनहस्तलेखलेखनविध्यनुरूपं मन्त्राणां सकलपाठमदत्त्वा ऽल्पीयांसं भागं विलिख्य पाठपूर्त्यै प्रायः ० विन्दोर्निर्देश उपलभ्यते। एतादृशस्थलेषु बहुत्र यथाशक्यं मन्त्रपाठस्य पूर्त्तिः कृता, तथापि कार्यस्य परिश्रमसाध्यत्वात् तादृशपरिश्रमेऽशक्तत्वान्मयोत्तरभागे यथापूर्वमेव मुद्रणं व्यधायि।

वस्तुत एतद्ग्रन्थस्य बहोः कालाद् यद् दौर्लभ्यमासीत् तस्यापाकरणार्थमेव मयैष बहुद्रव्यसाध्यप्रयत्नो विहितः। एतेन यदि केषामपि श्रौतपदार्थजिज्ञासूनां साहाय्यं सम्पत्स्यते तर्ह्यहं स्वप्रयत्नं सफलं मंस्ये।

प्रकाश्यमाणे ऽस्मिन् ग्रन्थे प्रायेण आध्वर्यवपदार्था एवात्र विवृताः। हौत्रौद्गात्रपदार्थविवरणपरोऽपि श्रीविश्वनाथश्रौतिमहाभागैर्विरचिष्यमाणो ग्रन्थो द्वितीयभागरूपेणाऽचिरादेव प्रकाशयिष्यते। तदर्थं प्रयत्नः प्रचलति।

**भाद्रशुक्ला १५** — **विदुषां वशंवदः—**
**सं० २०४१** — **युधिष्ठिरो मीमांसकः**

# चतुर्होतृ-प्रभृतीनां मन्त्राः

**चतुर्होतृमन्त्राः**—"पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता।" तै० आर० ३।२।। उपवक्ता= ब्रह्मेति सायणः। मै० संहितायां (१।९।१) तु—'त्वष्टाऽग्नीत्। मित्र उपवक्ता' इति भेदः।

**पञ्चहोतृमन्त्रः**—"अग्निर्होता। अश्विनावध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता॥" तै० आ० ३।३।। अध्वर्यू=अध्वर्युः प्रतिप्रस्थाता चेति सायणः। अध्वर्योर्द्वित्वमभिप्रेत्य पञ्च संख्याऽत्र ज्ञेया। मै० संहितायां (१।९।१) तु 'रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता' इति भेदः।

**षड्ढोतृमन्त्रः** (पशुबन्धादौ)—"सूर्यं ते चक्षुः। वातं प्राणः। द्यां पृष्ठम्। अन्तरिक्षमात्मा। अङ्गैर्यज्ञम्। पृथिवीं शरीरैः॥" तै० आ० ३।४॥

**षड्ढोतृमन्त्रः** (चयने)—वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। आपोऽभिगरः। मनो हविः। तपसि जुहोमि॥"तै० आ० ३।६॥ अभिगरः= प्रोक्षणार्था आपस्ता अभिगरो ब्रह्मस्थानीयाः। तपसि= अग्निस्थानीये इति सायणः।

**सप्तहोतृमन्त्रः**—"महाहविर्होता। सत्यहविरध्वर्युः। अच्युतपाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्याश्चाप्रतिधृष्याश्च यज्ञस्याभिगरौ। अयास्य उद्गाता॥" तै० आ० ३।५॥ अत्र सायणभाष्यम्—'महाहविसत्यहविरित्याद्या अयास्यान्ता सप्तसंख्याका महर्षयः। तन्महर्षिरूपा अत्रत्या होत्रादयः। यज्ञस्य सोमयागस्य अभिगरौ अभित उद्गातुः पुरस्तात् पश्चाच्च गृहीतप्रस्तारप्रतिहारभागौ गायेते इति प्रस्तोतृप्रतिहर्तारावभिगरौ। होताऽध्वर्युराग्नीध्रो ब्रह्मा प्रस्तोता प्रतिहर्तोद्गातेति सप्तसंख्याका होमनिष्पादकाः।' मै० संहितायां (१।९।१) तु 'अचित्तपाजा अग्नीत्। अचित्तमना उपवक्ता' इति भेदः।

**दशहोतृमन्त्रः**—चित्तिः स्रुक्। चित्तमाज्यम्। वाग्वेदिः। अधीतं बर्हिः। केशो ऽग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मन उपवक्ता। प्राणो हविः। सामाऽध्वर्युः॥ तै० आ० ३।१॥ 'अत्राग्निद्वयेन चाहवनीयगार्हपत्यौ विवक्षितौ'। उपवक्ता= अनुवचनकर्तुर्होतुः पुरा प्रैषवक्ता मैत्रावरुणः। यद्वा प्रोक्षणादिवचनानुज्ञायां पृष्टायां ब्रह्मा तदनुज्ञां वक्ति तस्मादयं ब्रह्मोपवक्ता' इति सायणः। मै० संहितायां (१।९।१) तु 'केतो ऽग्निः विज्ञातमग्नीत्' इति भेदः। तथा 'सामाध्वर्युः' इत्यतो ऽग्रे 'इन्द्रं गच्छ स्वाहा' इत्यधिकः पाठः।

एतेषां चतुर्होतृप्रभृतीनां मन्त्राणां काम्यप्रयोगः तै० ब्रा० २।३।१०; चयने प्रयोगः तै० ब्रा० ३।१२।५ इत्यत्र द्रष्टव्यः। दशहोतृप्रभृतिसंज्ञानां निर्वचनार्थं तै० ब्रा० २।३।११ द्रष्टव्यम्। मै० संहितायाः प्रथमकाण्डस्य नवमानुवाके चतुर्होतृप्रभृतिमन्त्राणां विस्तरशो वर्णनमुपलभ्यते।

---

# संशोधन-पत्रम्

येषु मुद्राक्षरेषु प्रायेणोत्तरभारते ग्रन्था मुद्रयन्ते, तेषु प्रायेण ई-उ-ऊ-ए-ऐ-ओ-औ-ऋ-ॠ-स्वराणां मात्रा उपरितनस्य रेफस्य संकेतो ऽनुस्वारचिह्नं च मुद्रणकाले त्रुटित्वा विलुप्यन्ते। अत एतादृशीनामशुद्धीनां पाठकैः स्वयं संशोधनमूहनीयम्। अत्राधस्तात् कासांचिद् अशुद्धीनां संशोधनं विधीयते।

| पृष्ठ | पं० | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १५ | २८ | वाक्यतिहोता | वाक्पतिर्होता |
| १७ | १ | पत्रासादनम् | पात्रासादनम् |
| १७ | २१ | अधः सादन० | अनधः सादन० |
| २३ | १५ | सामधेनीः | सामधेन्यः (ऋचः) |
| ३१ | २७ | वीतवत्पादान्ताः | वीतवत्पदान्ताः |
| ६९ | १६ | अग्निवारुणेष्टिः | आग्निवारुणेष्टिः |
| ७२ | २६ | आयायण० | आग्रयण० |
| ७२ | २९-३० | २.६.२—६ | आप० श्रौ० ६.२९.२–६॥ |
| ९७ | २३ | अग्निहो······कृत्य | नित्यवत्सा गौः |
| १०५ | २२ | दक्षिणानुरूपघ्ना० | दक्षिणानुरूनुपघ्ना० |
| १११ | १२ | प्रतिष्ठाकामः-इष्टचा | **प्रतिष्ठाकामेष्टिः**–प्रतिष्ठाकाम इष्टचा |
| १२३ | १२ | यूपाच्छ्रय० | यूपोच्छ्रय० |
| १३४ | २१ | पश्वङ्गाहवि० | पश्वङ्गहवि० |
| १७४ | २५ | अश्विनग्रहा० | आश्विनग्रहा० |
| २०७ | २७ | प्रवर्ग० | प्रवर्ग्य० |
| २४१ | १७ | आग्नीध्रिया० | आग्नीध्रीया० |

---

# अकारादिक्रमेण-पदार्थनामानि

* ॐ *

# श्रौतपदार्थ-निर्वचनम्

## ऐष्टिक-पदार्थाः

१. इष्टिः—इष्टिशब्द ऋत्विक्चतुष्टयसंपाद्यसपत्नीकयजमानकर्तृकर्मनामधेयम् ॥

२. **यजमानः**—तत्र 'यजते ऽसौ यजमानः' इति विग्रहे यजमानशब्दः स्वार्थकर्मानुष्ठानकर्तृवाचकः ।[1]

३. **अध्वर्युः**—ऋत्विङ्मध्ये यजमानो यं पूर्वं वृणीते, कर्मण आरम्भसमाप्ती च यः करोति अध्वरं यज्ञं युनक्तीति विग्रहेण[2], सोऽध्वर्युरित्युच्यते ।

४. **ब्रह्मा**—कर्मकाले यजमान आहवनीयस्य दक्षिणत उदङ्मुख उपविशति तस्य पूर्वस्यां दिशि तत्रैवोदङ्मुखो दक्षिणोत्तरिणोपस्थेन[3] दक्षिणेऽङ्के उत्तानं सव्यं पाणिं प्रागग्रं निधाय तदुपरि तथैव न्यञ्चं[4] दक्षिणं निधाय

---

१. कर्मजन्यफल-भोक्तेति यावत् ।

२. अयं विग्रहो यास्काचार्येण प्रदर्शितः—'अध्वर्युरध्वरयुरध्वरं युनक्तचध्वरस्य नेताऽध्वरं कामयत इति वाऽपि वाधीयाने युरुपबन्धोऽध्वर इति यज्ञनाम ध्वरति हिंसाकर्मा तत्प्रतिषेधः (निरु० १।८) इति । इदमयुक्तमित्यपरे यजमानस्याध्वरमिच्छतीत्यर्थे छन्दसि परेच्छायामपि क्यज् वक्तव्यः (महा० ३।१।८ वा०) इति वार्तिकेनाध्वरशब्दात्कचचि कचाच्छन्दसि-(अष्टा० ३।२।१७०) इत्यनेनो प्रत्ययेऽतो लोपे कव्यध्वरपृतनस्यर्चिलोपः-(अष्टा० ७।४।३९) इति सूत्रेणाध्वराकारस्य लोपेऽध्वर्युशब्दः सिद्धो भवतीति कव्यध्वरेति सूत्रस्योदाहरणमध्वर्युं वा मधुपाणिमिति प्रदर्शयतः कौमुदीकारस्य संमतम् ।

अथवा कव्यध्वर(अ० ७।४।३९)इति सूत्रे मनोरमायां "मृगय्वादिगणेऽप्यध्वर्युशब्दः पठचते तत्र व्युत्पत्यन्तरं बोध्यम्" इत्युक्ते मृगं यातीतिवद् अध्वरं यातीत्यध्वर्युशब्दः कुप्रत्ययान्तः । तत्राध्वराकारलोपोपि निपातनादिति, उभयथापि मूल प्रदर्शितव्युत्पत्त्याऽध्वर्युशब्दस्यासिद्धेः । चरणव्यूहे तु "मन्त्रब्राह्मणकल्पानामङ्गानां यजुषामृचाम् । षण्णां यः प्रविभागज्ञः सोऽध्वर्युः कृत्स्नमुच्यते" इत्युक्तम् ।

३. दक्षिणं च तदुत्तरं च दक्षिणोत्तरं तद्वता जानुना । उत्तरं सव्यजानोरुपरिस्थापितम् ॥

४. अर्थात् न्युब्जम् ।

य आस्ते सर्वदा कर्मणि दत्तचित्तः प्रणीताप्रणयनादौ अभ्यनुज्ञाकर्ता ऋग्यजुःसाममन्त्रकर्मभ्रेषे गार्हपत्यदक्षिणाग्न्याहवनीयेषु[1] क्रमेण [2]प्रायश्चित्ताहुतिहोमकर्ता स ब्रह्मपदवाच्यः ॥

५. **होता**—यस्तु वेद्युत्तरश्रोण्युत्तरतः प्राङ्मुखो दक्षिणोत्तरिणोपस्थेन उपविशति अवकाशवदङ्गुलो संहितौ पाणी हृदयदेशे अङ्के वा धारयति सामिधेनीः[3] प्रयाजान्[4] आज्यभागयाज्यापुरोनुवाक्याः[5] सूक्तवाकं[6] शंयुवाकं[7] च पठति स होतृपदवाच्यः ॥

६. **आग्नीध्रः, अग्नीद् वा**—यश्च ऊर्ध्वाग्रमसिवत् स्फ्यं[8] दक्षिणहस्ते धारयन् उत्करदेशे च दक्षिणामुखस्तिष्ठति अध्वर्युणा आश्रवणे कृते अस्तुशब्दपूर्वकश्रौषट्शब्दोच्चारणरूपप्रत्याश्रवणं करोति स आग्नीध्र इति अग्नीदिति चोच्यते ॥

७. **पत्नी (यजमान-पत्नी)**—यजमानस्य स्त्री यजमानवद्यज्ञफलभोक्त्री गार्हपत्यस्य पश्चिमदक्षिणे देशे पूर्वमुदङ्मुखी ऊर्ध्वजानुरुपविशति, ततः पयस्वत्याचमनादि गार्हपत्ये समिदाधानान्तं कर्म करोति, ततस्तृणनिरसनं कृत्वा तत्रैवोर्ध्वजानुः प्राङ्मुख्युपविशति, पत्नीसंयाजप्रचारानन्तरं अवभृथस्थानीये अग्निहोत्रहवणीजलनिनयने पत्न्यञ्जलौ [9]योक्त्रमाधाय होत्रा कृते स्वयं पूर्ववत्समिदाधानं पुनः परिषेकान्तं कृत्वा पूर्वं यथा वेद्युत्करयोर्मध्ये[10] मार्गेण प्रविष्टा तथा तेनैव मार्गेण विहारान्निर्गच्छति सा पत्नी भवति ॥

८. **विहारः**—यागार्थं यत्र यत्र यावती भूमिः श्रुत्यादिभिः परिमाणविशेषविशिष्टत्वेन विहिता तत्र तत्र तावती भूमिः विहारपदवाच्या ॥

---

१. गार्हपत्यादिषु प्रायश्चित्ताहुतिदातृत्वं ब्रह्मणः केवलं बौधायनीयानामेव, न त्वापस्तम्बहिरण्यकेशिप्रभृतिसूत्रानुसारिणामिति सामान्यब्रह्मलक्षणे चिन्त्यमेतत् ॥ कातीयानां त्वनादिष्टहोममात्रं ब्रह्मकर्तृ कर्म ।

२. पदार्थः—६१ । ३. पदार्थः—१८५ । ४. पदार्थः—२४७ ।

५. आज्यभागः पदार्थः—२५७; याज्यापदार्थः—३३३; पुरोनुवाक्यापदार्थः—२२८ ।

६. पदार्थः—३०६ । ७. पदार्थः—३११ । ८. पदार्थः—३४ ।

९. पदार्थः—६५ । १०. वेदि-पदार्थः—३३; उत्करपदार्थः—२५ ।

९. **अङ्गुलम्**—परस्परसंश्लिष्टानां चतुर्दशसंख्याकानां अणूनामकानां धान्यविशेषाणां यत्परिमाणं तद्, अथवा कोशसंस्थानवत् स्थापितानां पृथुप्रदेशेन संश्लिष्टानां चतुस्त्रिंशत्संख्याकानां तिलानां यत्परिमाणं तदङ्गुलपदवाच्यं परिमाणमिति बौधायनशुल्बसूत्रे प्रसिद्धम् ॥

१०. **पदम्**—पञ्चदशाङ्गुलं पदमुच्यते ॥

११. **अग्निहोत्रशाला**—शुद्धे[1] रमणीये देशे समचतुरस्रा दीर्घचतुरस्रा

---

१. कातीयानां दर्शपूर्णमासविहारनिर्माणप्रकारः—गार्हपत्यस्य (प्रत्यक्स्थस्य मध्यादाहवनीयस्य (प्राक्स्थस्य) मध्यपर्यन्तमन्तरमेकादश द्वादश वा प्रक्रमाः 'प्रक्रमो द्वादशाङ्गुलः' इति परिशिष्टे। प्रक्रमः पदमित्यनर्थान्तरम्। गार्हपत्यकुण्डं सार्द्धत्रयोदशाङ्गुलमितकर्कटिकभ्रामणेन वृत्तं कार्यम्। आहवनीयस्य तु समचतुरस्रं तस्य व्यासविस्तृती चतुर्विंशाङ्गुलमिते। गार्हपत्याहवनीययोर्मध्ये यावतीरज्जुस्तावत्या रज्ज्वाः षड्भागान्कृत्वा स्वषष्ठभागं तस्यां संयोजयेत्,एवं सप्तभागाः समाजाताः। ततः सप्तमभागसहितां रज्जुं त्रेधाविभज्य तृतीयांशद्वयेऽपि चिह्नं कृत्वा प्रान्तयोः पाशौ कृत्वा गार्हपत्यमध्यस्थितशङ्कौ आहवनीयमध्यस्थित मध्यशङ्कौ च पाशौ दत्वा गार्हपत्यात् प्रथमचिह्ने दक्षिणस्यां कर्षिते तत्र चिह्नं कार्यम् (अयं दक्षिणाग्निकुण्डमध्यः) तच्चिह्नादुत्तरभागे सार्द्धनवाङ्गुलप्रदेशे शङ्कुर्देयः। तत्र पूर्वापरं रज्जुर्देया। शङ्कुसकाशाद्यवाधिकैकोनविंशाङ्गुलैर्भ्रमणं कार्यमुत्तरार्द्धस्य त्यागस्तेन अर्द्धचन्द्राकारो दक्षिणाग्निखरः सम्पद्यते। आहवनीयमध्यशङ्कोः सकाशात्पश्चिमस्यां त्र्यरत्निपरिमिते देशे शङ्कुर्देयः। तत्सकाशाद् दक्षिणस्यामुत्तरस्यां द्व्यरत्निपरिमितेदेशे शङ्कुर्देयः। आहवनीयमध्यशङ्कुसकाशात्सार्द्धारत्निपरिमिते देशे दक्षिणत उत्तरतश्च शङ्कुर्देयः। चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद्विषमचतुरस्रा वेदिः सिद्ध्यति। ततः प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यंतं कोणद्वयवेष्टनेन सूत्रं प्रदेयं तस्यार्द्धं कर्त्तव्यम्। अर्द्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य आग्नेयस्थशङ्कुवेष्टनेन दक्षिणतः, एवमीशानकोणस्थशङ्कुवेष्टनेनोत्तरतश्च शङ्कुः पृथक्पृथक् देयः। (इदमेव सङ्ग्रहमध्यम्) ताभ्यां शङ्कुभ्यां दलीभूतरज्जुचतुर्थांशेन वेदिमध्ये सङ्ग्रहौ (अर्द्धचन्द्राकारौ) कार्यौ। तत्पश्चाद् द्वादशाङ्गुलमवशिष्टाभूमिः श्रोणिरित्यभिधीयते। पुरस्तादाहवनीयं यावदंस इत्यभिधीयते। तत आहवनीयमध्यात् प्रथमचिह्ने उत्तरस्यां कर्षिते तत्र चिह्नं कार्यं (अयमुत्करमध्यः) तच्चिह्नात् त्र्यङ्गुलकर्कटिभ्रामणेन वृत्त उत्करः कार्यः। अयं च द्व्यङ्गुलखातो भवति। तत अग्निकोणादारभ्य ईशानकोणपर्यन्तं वेद्यां संयोज्य (मिश्रयित्वा) सार्द्धत्रिहस्ता वेदिः सम्पादनीया। सङ्ग्रहौ वर्जयित्वा वेद्यां सर्वत्र त्र्यङ्गुलः खातो विधेयः। कुण्डेषु मेखला द्वादशाङ्गुलोच्चा चतुरङ्गुलविस्तारा एकैव भवतीति।

वा अग्निहोत्रहोमशाला कर्तव्या वास्तुशास्त्रोक्तरीत्या। तस्याः प्राच्यां दक्षिणस्यां च दिशि एकैकं द्वारं कार्यम्, सा अग्निहोत्रशालेति गीयते।[1]

१२. **गार्हपत्यायतनम्**—तस्यां शालायां पश्चिमभागे मध्यदेशे सप्तविंशत्यङ्गुलव्यासं मण्डलाकारं गार्हपत्यायतनं भवति ॥

१३. **प्रथमा मेखला**—तस्य[2] बाह्यतः शुद्धमृत्तिकानिर्मिता षडङ्गुलिपरिमितोच्छ्राया षडङ्गुलपरिमितायामा प्रथमा मेखला भवति ॥

१४. **द्वितीया मेखला**—तस्या उपरि पूर्वोक्तोच्छ्राया चतुरङ्गुलपरिमितायामा द्वितीया मेखला भवति ॥

१५. **कुण्डम्**—तदेतन्मेखलाद्वयसंस्थानं कुण्डमित्युच्यते ॥

१६. **गार्हपत्यः**—गार्हपत्यायतने स्थापितो ऽग्निर्गार्हपत्यनामको गृहपतिना यजमानेन संयुक्त इति व्युत्पत्त्या **गृहपतिना संयुक्ते ञ्य**[3] इति सूत्रेण 'ञ्य' प्रत्ययात् ॥

१७. **पृष्ठ्यासूत्रम्** गार्हपत्यस्य मध्यादारभ्य पूर्वस्यां दिशि ऋजुत्वेन नीयमानम् आहवनीयमध्यपर्यन्तं सूत्रं पृष्ठ्यासूत्रमित्युच्यते ॥

१८. **पृष्ठ्या**—तादृशसूत्रस्य आधारभूतत्वेनोपलक्षिता भूमिगता रेखा पृष्ठ्या इति व्यवह्रियते ॥

१९. **आहवनीयायतनम्**—पृष्ठ्यासूत्रस्य यस्मिन् देशे पूर्वोऽन्तः पतति स आहवनीयमध्यो भवति। आहवनीयमध्यशङ्कोः पूर्वस्यां दिशि एकः शङ्कुस्तथा पश्चिमायां दिशि च एकः शङ्कुः प्रादेशमात्रे देशे निखेयः। अरत्नीद्वयायामा उभयतःपाशा रज्जुः कर्तव्या। तस्या एकस्मात्पाशादारभ्य द्वादशाङ्गुलमिते देशे किंचिद्वर्णचिह्नं कार्यं तथा अष्टादशाङ्गुलमिते भागे चिह्नं कर्तव्यम्। पूर्वनिखातापाश्चात्त्यपौरस्त्यशङ्क्वोः पाशौ प्रतिमोचनीयौ। तत्र चिह्नसमीपवर्ती पाशः पाश्चात्त्यशङ्कौ निधेयः। ततो द्वितीयचिह्ने सूत्रं गृहीत्वा दक्षिणत आकर्षणं कार्यं यस्मिन् देशे प्रथमलक्षणसंबन्धो

---

१. कातीयानां तु "विंशत्यरत्निः शालास्यात्तदर्धेन तु विस्तृता। त्रिमितं चतुरस्रं च स्याद् दशारत्निप्रमाणतः" इति परिशिष्टोक्तपरिमाणमर्थात्परिमाणं वाऽन्यगारद्वयं पूर्वापरं कृत्वा पूर्वेऽन्यगारे पूर्वे पश्चिमे चेति द्वारद्वयं, द्वितीयेऽप्यगारे पूर्वे दक्षिणे चेति द्वारद्वयं कुर्यात्।

२. कातीयानां त्वेकैव मेखलेत्युक्तम्।

३. अष्टा० ४।४।९०॥

भवेत् स आहवनीयायतनस्य नैर्ऋतकोणः। एवमुत्तरतो द्वितीयलक्षणे धृत्वा सूत्रमाकृष्य प्रथमं चिह्नं यत्र पतेत् स आहवनीयवायव्यकोणः। ततः तयोरेव शङ्क्वोः तस्या एव रज्जोः पाशौ विपरीतौ निधाय अष्टादशाङ्गुलमिते चिह्ने रज्जुं धृत्वा दक्षिणत आकृष्य प्रथमचिह्नपातस्थानमाहवनीयस्याग्नेयकोणः। एवमेवोत्तरतः द्वितीयचिह्ने धृत्वा आकृष्य प्रथमलक्षणपातस्थानमाहवनीयस्यैशानः कोणः। एवं रीत्या संपन्नं चतुष्कोणमाहवनीयायतनमुच्यते ॥

२०. **आहवनीय-कुण्डम्**—तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं चतुरस्रमाहवनीयकुण्डं भवति ॥

२१. **आहवनीयः**—तन्मध्ये स्थापितोऽग्निः आहूयते ऽस्मिन्निति व्युत्पत्त्या मुख्यः[1] होमाधारत्वाद् आहवनीयपदवाच्यः ॥

२२. **दक्षिणाग्नेरायतनम्**—पृष्ठ्यासूत्रस्य पञ्चमं षष्ठं वा भागम आगन्तुकम् अधिकं पृष्ठ्यासूत्रे संयोज्य उभयतःपाशां रज्जुं कृत्वा पुनः सर्वस्य सूत्रस्य पञ्चभागान् कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभाजिताया रज्जोरपरस्मादन्ताद् भागद्वये गते सति चिह्नं कृत्वा द्वितीयं पाशम् आहवनीयमध्यशङ्कौ नियोज्य चिह्ने सूत्रं धृत्वा दक्षिणत आकृष्य लक्षणसंपातस्थाने शङ्कुं निहन्यात्। ततः पञ्चदशाङ्गुलपरिमितां रज्जुम एकतः पाशां कृत्वा तस्मिन्निहते शङ्कौ तं पाशं प्रतिमुच्य तया रज्ज्वा मण्डलं परिलिखेत्। तस्य मण्डलस्योत्तररेखायाः पूर्वनिहितशङ्कोश्च मध्ये अन्यं शङ्कुं निहन्यात्। तस्या एव रज्ज्वाः पाशं तस्मिन् शङ्कौ प्रतिमुच्य पञ्चदशाङ्गुलपरिमितया तयैव रज्ज्वा अन्यन्मण्डलं परिलिखेत्। अस्य मण्डलस्य रेखा पूर्वकृतमण्डलरेखाया उपरि दक्षिणभागे उत्तरभागे च पतति तयोः संसर्गस्थानयोरेकं सूत्रं धृत्वा पश्चिमपूर्वायतसूत्रकृतरेखात उत्तरतो विद्यमानमण्डलभागं त्यजेत् मण्डलस्य दक्षिणतो विद्यमानो भागः पूर्वकृतमण्डलस्य च दक्षिणो भागः शूर्पाकारः संपद्यते स दक्षिणाग्नेरायतनं भवति ॥

२३. **दक्षिणाग्निकुण्डम्**—तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं शूर्पाकारं दक्षिणाग्निकुण्डमित्युच्यते ॥

२४. **दक्षिणाग्निः, अन्वाहार्यपचनो वा**—तन्मध्ये स्थापितो ऽग्निर्दक्षिणाग्निरन्वाहार्यपचन इति चोच्यते ॥

---

१. प्रधानः।

२५. **उत्करः**—पूर्वं पञ्चधा विभाजितायाः रज्जोर्दक्षिणाग्न्यायतन-साधने यः पाशो गार्हपत्यमध्यशङ्कौ प्रतिमुक्तस्तं पाशम् आवहनीयमध्यशङ्कौ प्रतिमुच्य आहवनीयमध्यशङ्कुपाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभाजितरज्जोः द्वयोर्भागयोर्गतयोर्यत्पूर्वं चिह्नं कृतं तत्र सूत्रं धृत्वा उत्तरत-आकर्षणीयं चिह्नसंसृष्टा भूमिः स्तम्बयजुर्हरणसमये दर्भशकलानि मृत्तिका-सहितानि यथा क्षिप्तेऽवकाशे लोके प्रक्षिप्यते तथा विधिवचनात् तस्यां भूमौ प्रक्षिप्यन्ते। अत उत्किरन्त्यस्मिन् वेद्यादिसंबन्ध्यवकरादिकमिति व्युत्पत्त्या उत्कर इति गीयते ॥

२६ **यजमानस्थानम्**—तथास्थितं तदेव सूत्रं तस्मिन्नेव चिह्ने धृत्वा दक्षिणत आकर्षणीयम्, चिह्नसंसृष्टा भूमिः यागकाले यजमानस्य तत्रोपवेशन-विधानाद् यजमानस्थानमित्युच्यते ॥

२७. **दक्षिणश्रोणिः**—आहवनीयायतनात्पश्चिमदिशि षण्णवत्यङ्गुल-परिमिते देशे शङ्कुर्निखातव्यः। तद्दक्षिणतो द्वात्रिंशदङ्गुलपरिमिते देशे एकः शङ्कुर्निखेयः। तथैवोत्तरतस्तावत्येव देशे द्वितीयः शङ्कुर्निखेयः। दक्षिणशङ्कुस्थानं दक्षिणश्रोणिरित्युच्यते ॥

२८. **उत्तरश्रोणिः**—उत्तरशङ्कुस्थानमुत्तरश्रोणिरिति गीयते ॥

२९. **दक्षिणांसः**—आहवनीयमध्यशङ्कोर्दक्षिणतश्चतुर्विंशत्यङ्गुलपरि-मितदेशे एकः शङ्कुर्निखेयः। तथैवोत्तरतस्तावत्येव देशे अपरः शङ्कुर्निखेयः। दक्षिणशङ्कुस्थानं दक्षिणांस इत्युच्यते ॥

३०. **उत्तरांसः**—उत्तरशङ्कुस्थानमुत्तरांस इति गीयते ॥

३१. **वेद्या दक्षिणं पार्श्वम्**—ततः षण्णवत्यङ्गुलपरिमितां रज्जुं तावदागन्तुकभागामुभयतः पाशां कृत्वा मध्ये लक्षणं कृत्वा दक्षिणश्रोण्यंस-शङ्क्वोः पाशौ प्रतिमुच्य लक्षणे रज्जुं गृहीत्वा दक्षिणत आकृष्य शङ्कुं तत्र निहन्यात्। तत उभौ पाशौ समस्य लक्षणशङ्कौ पाशद्वयं प्रतिमुच्य रज्जु-मध्येन दक्षिणश्रोणिशङ्कोरारभ्य दक्षिणांसशङ्कुपर्यन्तं लिखेत्। एवंकृते या रेखा उत्पद्यते सा वेद्या दक्षिणं पार्श्वमिति व्यवह्रियते ॥

३२. **वेद्या उत्तरं पार्श्वम्**—तथैव तस्या रज्ज्वाः पाशौ उत्तरश्रो-ण्यंसशङ्क्वोः प्रतिमुच्य रज्जुमध्येन चिह्नितेन रज्जुमुत्तरत आकृष्य चिह्न-संपातस्थाने शङ्कुं निहन्यात्। तत उभौ समस्य अस्मिन्निहते शङ्कौ प्रति-मुच्य मध्यभागस्थचिह्नेन सूत्रं धृत्वा उत्तरश्रोणिशङ्कोरारभ्य उत्तरांसशङ्-कुपर्यन्तं लेखां लिखेत्। सा लेखा वेद्युत्तरपार्श्वमित्युच्यते ॥

३३. **प्रथम-द्वितीय-मेखलास्वरूपम्**—अनया रीत्या दक्षिणोत्तर-पार्श्वयुक्ता दक्षिणोत्तरश्रोणिसहिता दक्षिणोत्तरांसयुक्ता उरोरूपशरीरावयवत्वेन उपनिषद्युक्ता यागकाले दर्भैराच्छादिता आज्यचरुपुरोडाशादिरूपहविरासादनाश्रयभूतावेदिरित्युच्यते। तस्या बाह्यतः **प्रथमा मेखला** चतुरङ्गुलोत्सेधा चतुरङ्गुलायामा मृत्तिकानिर्मिता भवति तस्य मेखलाया उपरि द्व्यङ्गुलोत्सेधा द्व्यङ्गुलायामा तथैव **द्वितीया मेखला** भवति।

३४. **स्फ्यः**—खदिरकाष्ठनिर्मितः अरत्निपरिमितो दीर्घश्चतुरङ्गुलपरिमितविस्तार आकारेण खड्गसदृशः स्फ्य इत्युच्यते॥

३५. **कपालानि**—पुरोडाशभर्जनार्थं मृत्तिकया निर्मितानि वह्नौ परिपक्वानि द्व्यङ्गुलोच्छ्रायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि सर्वाणि मिलित्वा गार्हपत्यपश्चाद्भूमौ गार्हपत्यायतनान्तः पश्चिमभागे वा उपधीयमानानि कपालपदवाच्यानि॥

३६. **एककपालः**—कस्मिंश्चित्पुरोडाशे एकमेव कपालं भवति। तत्र तदेकं कपालम् अश्वशफपरिमाणं अश्वशफाकारं उपधीयते स च पुरोडाशः श्रुतौ एककपाल इति गीयते॥

३७ **अष्टाकपालादयः**—पुरोडाशस्यानेककपालत्वे तु अश्वशफाकारता अश्वशफपरिमाणता च कपालसमूहे बोद्धव्या। तत्राष्टाकपाले प्रकृतिभूते पुरोडाशे प्रथमं कपालं चतुरस्रं मध्ये उपधीयते। तस्य पुरस्ताद् द्वितीयं शफाकारतासंपादनाय अर्धचन्द्राकारं, तृतीयं तु मध्यमस्य पश्चाद् द्वितीयसदृशं, चतुर्थं तु मध्यमस्य दक्षिणतस्तादृशमेव, पञ्चमं तु दक्षिणस्य पुरस्तादाग्नेयकोणे शफाकारतासंपत्तियोग्यं, षष्ठं तु दक्षिणस्य पश्चाद् नैर्ऋतकोणे समुदितस्य शफाकारतासंपत्तियोग्यं, सप्तमं तु मध्यमस्योत्तरार्धे पश्चिमभागे शफाकारतासंपत्तियोग्यम्, अष्टमं तु मध्यस्योत्तरार्धे पूर्वभागे एवमष्टौ कपालानि समुदितानि अश्वशफपरिमितानि अश्वशफाकाराणि भवन्ति। एवं नवकपालादिषु अष्टाकपालन्यूनकपालादिषु च कपालरचना कपालविभागश्च अश्वशफाकारतातत्परिमाणसंपत्तिसंभवेन कर्तव्यौ। एते च पुरोडाशास्तावत्सु कपालेषु भर्जनीयत्वादष्टाकपालादिपदवाच्या भवन्ति॥

३८. **अग्निहोत्रहवणी**—दैर्घ्ये प्रादेशमात्री अरत्निमात्री बाहुमात्री वा हस्त्योष्ठीत्वपक्षे अष्टाङ्गुलपरिमितबिला हंसमुखीत्वपक्षे वायसपुच्छकात्वपक्षे च पञ्चाङ्गुलपरिमितबिला चतुरङ्गुलपरिमितबिला वा बिलावशिष्टभागेन दण्डयुक्ता विकङ्कतकाष्ठेन निर्मिता अग्निहोत्रहोमसाधनत्वादग्निहोत्रं हूयतेऽनयेति करणव्युत्पत्त्या ऽग्निहोत्रहवणीत्युच्यते॥

३९. **शूर्पम्**—वंशनिर्मितं व्रीह्यादीनां पुरोडाशादिसंबन्धिनां निस्तुषकरणोपयोगि शूर्पमित्युच्यते ॥

४०. **कृष्णाजिनम्**—कृष्णमृगस्य चर्म व्रीह्याद्यवघातकाले उलूखलस्याधःस्थापनोपयोगि कृष्णाजिनमिति कथ्यते ॥

४१. **शम्या**—खदिरकाष्ठनिर्मिता षट्त्रिंशदङ्गुलपरिमितायामा अग्रभागे अष्टास्वङ्गुलिषु [1]कुम्बाष्टकयुता तण्डुलादिपेषणकाले दृषदोऽधस्तात् स्थापनायोपयुज्यमाना आग्नीध्रकर्तृकदृषदुपलादिसमाहननादौ करणभूता शम्यापदवाच्या ॥

४२. **उलूखलम्**—पलाशकाष्ठनिर्मितं द्वादशाङ्गुलपरिमितोच्छ्रायं उपरितनार्धभागे बिलयुक्तं चरुपुरोडाशसंवन्धिव्रीह्यादिकण्डनोपयोगि उलूखलमित्युच्यते ॥

४३. **मुसलम्**—उलूखलार्धत्रिगुणायामं खदिरकाष्ठनिर्मितं कण्डनोपयोगि मुसलमित्युच्यते ॥

४४. **दृषद्**—पाषाणमयी पेषणकाले पेषणीयद्रव्याश्रयभूता दृषदित्युच्यते ॥

४५. **उपला**—पाषाणनिर्मिता पेषणसाधनभूता उपला कथिता ॥

४६. **जुहूः**—पलाशकाष्ठनिर्मिता अग्निहोत्रहवणीसदृशी मुख्यहोमकरणत्वात् हूयतेऽनयेति व्युत्पत्त्या जुहूपदवाच्या ॥

४७. **उपभृत्**—अश्वत्थकाष्ठनिर्मिता जुहूतुल्या उप समीपे भ्रियते ध्रियत इति व्युत्पत्त्या होमकाले अध्वर्युणा सव्यहस्तेन होमार्थधृतदक्षिणहस्तसंबन्धिजुह्वाः समीपे धारणात् उपभृदिति भण्यते ॥

४८. **स्रुवः**—खदिरकाष्ठनिर्मितः अरत्निमात्रो दीर्घः अग्रभागे अङ्गुष्ठपर्वमात्रवर्तुलबिलयुक्तः आज्यहोमादौ करणभूतः । स्रवत्याज्यादिद्रव्यमस्मादिति व्युत्पत्त्या स्रवपदवाच्यः ॥

४९. **ध्रुवा**—विकङ्कतवृक्षसंवन्धिकाष्ठेन निर्मिता जुहूसदृशी होमाद्यर्थं स्रुवेण गृह्यमाणस्याज्यस्याधारभूता यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति व्युत्पत्त्या ध्रुवापदवाच्या ॥

---

१. कुम्बो वर्तुलग्रन्थिसदृशाकारः ।

५०. **प्राशित्रहरणम्**—खदिरकाष्ठनिर्मितं प्रादेशपरिमितं गोकर्णाकारं चतुरगङ्गुलपरिमितदण्डयुक्तम् प्राशित्रं, नाम ब्रह्मणे दीयमानो हुतशेषहविर्भागः स ह्रियते ऽनेनेति करणव्युत्पत्त्या प्राशित्रहरणपदवाच्यम् ॥

५१. **इडापात्रम्**—अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलपरिणाहं पदपरिमितायामबिलयुक्तं चतुरङ्गुलदण्डं इडाया आधारत्वात् इडापात्रमित्युच्यते ॥

५२. **इडा**—हुतहविःशेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडेत्युच्यते ॥

५३. **मेक्षणम्**—अश्वत्थकाष्ठनिर्मितं अरत्निपरिमितं अग्रभागे चतुरङ्गुलचतुस्रफलकयुत भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्ती (पदार्थ ५५)-भिरद्भिः संमेलनकरणादौ करणतया विहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपदवाच्यम् ॥

५४. **संवापः**—गार्हपत्ये भर्जनपात्रीमधिश्रित्य तस्यां तप्तायां सत्याम् अध्वर्युः सव्यहस्तेन उदगग्रं पवित्रं धृत्वा दक्षिणहस्तेन कृष्णाजिनात् पिष्टानि क्षिपति । तत्क्षेपणं संवाप इत्युच्यते ॥

५५. **मदन्ती**—भर्जनपात्र्यधिश्रयणकाले यज्जलपात्रमधिशृतं भवति, तत्रत्यं जलं अप्शब्दविशेषणत्वाद्बहुवचनान्तेन मदन्तीशब्देनोच्यते ॥

५६. **पवित्रे**—अनखच्छिन्नं साग्र प्रादेशमात्रं मन्त्रसंस्कारयुक्तं समपरिणाहं प्रोक्षणादौ प्रायः उपयोगि दर्भद्वयं पवित्रसंज्ञं भवति ॥

५७. **पिष्टोद्वपनी**—गार्हपत्याधिश्रितायां यस्यां पात्र्यां पिष्टानि समुप्यन्ते सा पिष्टोद्वपनीति पठ्यते ॥

५८. **प्रणीताप्रणयनम्**—अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलदण्डम् अष्टाङ्गुलबिलं प्रादेशमात्रं, प्रणीतानामकं जलं नीयतेऽनेनेति करणव्युत्पत्त्या प्रणीताप्रणयनमित्युच्यते ॥

५९. **आज्यस्थाली**—पूर्वोक्तं पवित्रमन्तर्धाय मन्त्रेण प्रायश्चित्तादिहोमार्थं जुह्वादिषु तिसृषु स्रुक्षु पूरणार्थं च यस्यां स्थाल्यामाज्यं गृह्यते सा आज्यस्थाली पदवाच्या ॥

६०. **प्रायः (भ्रंशः)**—कर्म द्विविधं समन्त्रकममन्त्रकं च । तत्र समन्त्रके कर्मणि 'यस्मिन् कर्मणि यो मन्त्रः श्रुत्यादिना मन्त्रान्ते कर्म कुर्वीत' इत्यादिवचनात् क्वचित्कर्मण आरम्भादादौ क्वचित्तु उपस्थानादिकर्मसु कर्मसनकाल-

मेव करणत्वेन विनियुक्तस्तस्य मन्त्रस्योक्तस्थाने पाठाभावः अविहितस्थाने पठनं च एवं कर्मणोऽकरणे अस्थाने कर्मानुष्ठानं च, अनयैव रीत्या मन्त्र-क्रिययोरुभयोरननुष्ठानम् अस्थाने तयोरनुष्ठानं विहिताकरणं निषिद्धाचरणं च प्रायश्चित्तपदैकदेशस्य प्रायः पदस्य नष्टशब्दापरपर्यायस्य वाच्यम् ॥

६१. **प्रायश्चित्तम्**—प्रायो नाम नष्टं तस्य चित्तं नाम पुनः संधानम् अकृतस्य कृतत्वसंपादकम् अन्यथा कृतस्य सुष्टुकृतत्वसंपादकम्, कृतस्य निषिद्धस्याकृतत्वसंपादकं कर्म विधायकश्रुत्यादिनैव तथा प्रतिपादनात् तच्च जपहोमादिरूपं तीर्थयात्रास्नानादि रूपं दोषानुसारेण श्रुत्यादिप्रतिपादितं प्रायश्चित्तमिति गीयते ॥

६२. **स्रुक्**—**'ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियाम्'**[1] इति श्रौतव्यवहारमूलककोशाद् ध्रुवोपभृज्जुहूस्रुवाणां चतुर्णां वाचकः स्रुक्शब्दः ॥

६३. **वेदः**—दर्भमुष्टिः प्रदक्षिणमावेष्टय द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सजानुसदृशसंपन्नः समन्त्रकवेदिसंमार्जनादिकर्मोपयोगी प्रच्छिन्नाग्रो वेद इत्युच्यते ॥

६४. **दारुपात्री**—इडापात्रतुल्यं भेदार्थं केनचिच्चिह्नेन युक्तं पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य मन्त्रेणाज्योपस्तरणं कृत्वा यस्मिन्पात्रे कृतोपस्तरणस्थाने पुरोडाशान् स्थापयित्वा, हविरासादनकाले वेद्यामासाद्य, यागकाले तत्पात्रस्थानामेव पुरोडाशानामवदानं प्रधानहोमार्थम्, ब्रह्मभागार्थं यजमानभागार्थं स्विष्टकृदर्थं प्राशित्रनामकब्रह्मभागार्थं चतुर्धाकरणार्थम् इडपात्रे ग्रहणार्थं च क्रियते, तत्पात्रं दारुपात्रीत्युच्यते ॥

६५. **योक्त्रम्**—कर्मकाले आग्नीध्रोऽध्वर्युप्रेषितः पत्नीं मन्त्रेण येन गुणेन मुञ्जमयेन वेष्टनेन त्रिगुणितेन कटिदेशे संनह्यति, स गुणो योक्त्रमित्युच्यते ॥

६६. **वेदपरिवासनानि**—वेदस्य यान्यग्राणि पूर्वं छिन्नानि तानि 'वेदस्य परिवासनानि' इति षष्ठीसमासे परिवासनशब्दस्य कर्मल्युडन्ततया वेदपरिवासनानीत्युच्यन्ते ॥

६७. **धृष्टिः**—[2]मेक्षणसदृश कपालोपधाने गार्हपत्यादङ्गारोद्धरणादौ उपयोगिनीं धृष्टिरित्युच्यते ॥

---

१. अमरकोश २।७।२४। २. मेक्षणपदार्थः—५३ ।

६८. **अन्वाधानम्**—'अध्वर्युर्यजमानो वाऽन्वाधानं करोति' तत्र गार्हपत्यस्य पश्चात् पद्मासनेनोपविश्य त्रिभिः स्वाहाकारान्तैर्ऋङ्मन्त्रैः तिस्रः स्थूला समिधो ऽभ्यादधाति, ततो दक्षिणाग्नावूर्ध्वजानुरुपविश्य तथैवाभ्याधाय गार्हपत्यस्य पश्चान्मार्गेणागत्य आहवनीयाद् वायव्यदेशे प्रह्वो ऽत्रस्थाय तथैव तिस्रः समिधो ऽभ्यादधाति । ततस्तत्रैव तिष्ठन् दशमेन ऋङ्मन्त्रेणोपस्थानं करोति । तदेतत्सकलं कर्म अनुकूलं करिष्यमाणस्य कर्मणः समिधामाधानम् इति व्युत्पत्त्या अन्वाधानमित्युच्यते ॥

६९. **परिसमूहनम्**—अनुकूलत्वं करिष्यमाणस्य कर्मणः अन्वाधाने कथमिति चेदित्थं यागात्पूर्वम् अग्निषु प्रकृतोपयोग्यर्थकैर्मन्त्रैः समित्प्रक्षेपणेनाग्नयः करिष्यमाणयागे सावधाना आमन्त्रिता इव भवन्ति—श्वः सद्यो वा अथमस्मासु होष्यतीति । अत एव प्रक्षिप्तानां समिधां रक्षणमात्रमायतनेष क्रियते, यागकाल एव तु तासां प्रज्वलनम् । अन्वाधानानन्तरमग्नीनां त्रिवार परिसमूहनपर्युक्षणे[1] विधीयेते । तत्र जलसहितेन पाणिना अग्न्यायतनोपरिष्टाद भागे ऐशानदिश आरभ्य पुनस्तद्दिक्पर्यन्तं प्रदक्षिणं संमार्जनं परिसमूहनमित्युच्यते ॥

७०. **पर्युक्षणम्**—तथैव दूरतो ऽस्पर्शनेन प्रदक्षिणं जलपरिषेकमात्रं पर्युक्षणपदवाच्यम् ॥

७१. **अलंकरणम्**—पर्युक्षणानन्तरं अग्न्यायतनानां अक्षतरङ्गवल्यादिभिर्यत्सुशोभितकरणं सकृद्गोमयसंमार्जनपूर्वकम् अध्वर्युयजमानपत्नीकर्तृकं तद् अग्न्यलङ्करणमित्युच्यते ॥

७२. **व्रतोपायनम्**—अग्न्यलङ्करणानन्तरं यजमानस्तीर्थेन[2] निर्गत्य, अग्रेणाहवनीयं परीत्य, पूर्वोक्ते स्वायतने उपविश्य, पाणौ सायं प्रादेशमात्रमुदगग्रं दर्भद्वयं धृत्वा, तेनैव दक्षिणेन पाणिना पयस्वतीमन्त्रेण त्रिरप आचामति । तत आहवनीयं तूष्णीं पर्युक्षणवत्सकृत्पर्युक्ष्य चतुर्भिर्मन्त्रैश्चतस्रः समिध आहवनीय आधाय पूर्ववत्परिषिञ्चति । तदेतद् यजमानकर्म व्रतग्रहणं व्रतोपायनमिति चोच्यते ॥

७३. **तीर्थः**—आहवनीयायतनस्योत्तरतः प्रागग्रेषु दर्भेषु प्रणीताप्रणयने प्रणीता नाम आप आसाद्यन्ते । तासां पश्चिमदेशः उत्करस्य तु पूर्वदेशः विहारप्रवेशनिर्गमयोर्मार्गः तीर्थसंज्ञकः ॥

---

१. पर्युक्षण-पदार्थः ७० ।    २. पदार्थः ७३ ।

७४. प्राणीताऽभाववति कर्मणि आहवनीयोत्तरदेशे आसादितस्य इध्मस्य पश्चिमभाग उत्करस्य पूर्वदेशस्तीर्थमित्युच्यते ॥

७५. चात्वालवत्सु कर्मसु चात्वालपश्चिमदेश उत्करपूर्वदेश एव तीर्थपदवाच्यः ।

७६. **शाखाहरणम्**—व्रतोपायनान्ते सन्नयति यजमाने अध्वर्युः प्राचीमुदीचीमैशानीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीमैशानीं वा शाखां असिदेन[1] छिनत्ति समन्त्रकम् । ततस्तां शाखां मन्त्रेण विहारदेशं प्रत्याहरति । तदेतत्कर्म शाखाहरणमित्युच्यते ॥

७७. **सन्नयन्**—यः सोमेनेष्टवान् तस्य यजमानस्य दर्शेष्टौ इन्द्राग्निदेवतास्थाने इन्द्रो महेन्द्रो वा देवतात्वेन विहितः । तत्र सत्यपि पुरोडाशद्रव्ये अधिकं द्रव्यद्वयं विहितम्—तत्रैकं पयः द्वितीयं दधि । तदेतद् द्वयं होमार्थं सम्यग् नयतीति कर्तृव्युत्पत्त्या तादृशो यजमानः सन्नयन्नित्यभिधीयते ।

७८. **सान्नाय्यम्**—दधिपयसी च 'पाय्यसान्नाय्य०' (अष्टा०३।१।१२९) इति सूत्रेण निपातनात् कर्मव्युत्पत्त्या सान्नाय्यपदाभिधेये ॥

७९. **वत्सापाकरणम्**—सान्नाय्यदधिपयसोः संपादने गवां संख्या अशक्तत्वात् न्यूना क्रियते चेत् षट्त्वसंख्यातो न्यूना न कार्या, षड्भ्यो गोभ्यो न्यूनसंख्याका गावो न कर्तव्याः, ततोऽधिकाश्चेदिष्टापत्तिरेव । पूर्वमाहृतया शाखया एतासां गवां वत्सानां दूरीकरणं समन्त्रकं वत्सापाकरणमित्युच्यते ॥

८०. **उपवेषः**—ततस्तस्याः शाखायाः पर्णानि छित्त्वा यं मूलभागं प्रादेशमात्रं छित्त्वा घष्टचकारं करोति, सान्नाय्यसंस्कारकाले गार्हपत्याङ्गाराणामुदग्दिशि निरूहणादौ उपयोगी, स उपवेष इति गीयते ॥

८१. **शाखापवित्रम्**—अग्रभागस्तु त्रिभिर्दर्भैर्वेण्याकारेण निबद्धः शाखापवित्रपदवाच्यः तस्य सायंदोहादावुपयोगः ॥

८२. **असिदः**—असन्नयतस्तु यजमानस्य शाखाहरणाभावात् व्रतोपायनानन्तरं अध्वर्युः गार्हपत्यस्योत्तरतो विद्यमानमसिदं श्वपरशुं[2] वाऽऽदत्ते मन्त्रेण । लोहमयक्षुरः छेदनोपयोगी असिद इत्युच्यते ॥

८३. **श्वपरशुः**—एवं बर्हिश्छेदनाद्युपयोगी श्वसदृशः कुठारः श्वपरशुरित्युच्यते ॥

---

१. पदार्थः ८२ । २. पदार्थः ८३ ।

८४. **परिग्रहणम्**—तयोरन्यतरद् गृहीत्वा मन्त्रेणाहवनीयदेशं गत्वा मन्त्रेण वेदिमवेक्ष्य दर्भदेशं गत्वा प्रस्तरपर्याप्तं दर्भमुष्टिं परिगृह्णाति। असि-दादिना छेदनीयदर्भमुष्टेः आसमन्तात् भेदाय भ्रामणं परिग्रहणपदवाच्यम् ॥

८५. **छेदनम्**—छिन्ने दर्भमुष्टौ भूमौ यो मूलभागो दृश्यते स छेदन-क्रियाया आधारत्वात् अधिकरणे ल्युटा छेदनपदवाच्यः ॥

८६. **उदकोपस्पर्शनम्**—'छेदने भेदने चैव खनने पितृरक्षसोः, रौद्राभि-चारणीयेषु उदकस्याभिमन्त्रणम्' इति वचनात् छेदनभेदनखननपैतृकराक्षस-रौद्राभिचारणकर्मसु कृतेषु शुद्धयर्थं विहितं दक्षिणकरस्य जलेन प्रक्षालनं उदकोपस्पर्शनमुच्यते ॥

८७. **प्रस्तरः**—तत्र प्रकृतीष्टौ चतस्रो दर्भमुष्टयश्छिद्यन्ते। प्रथमा दर्भमुष्टिर्मन्त्रैः संस्कृता वेद्यां जुहूर्यस्यान्निधीयते, विधृतिसंज्ञकयोः उदगग्रयोर्दर्भ-योरुपरि च या प्रागग्रा स्थापिता भवति सा (दर्भमुष्टिः) प्रस्तर इत्युच्यते ॥

८८. **बर्हिः**—अन्यास्तिस्र अमन्त्रकफलक्रियामात्रसाध्याः वेद्यास्तर-णार्थाः हविषां पात्राणां स्थापनयोग्या बर्हिःपदवाच्याः ॥

८९. **बर्हिसन्नहनम्**—दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्टय अग्रभागे अन्यद् दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा तदपि तथैवावेष्टय तदग्र-भागे अन्यद् दर्भत्रयं तथैव कृत्वा पुनस्तदग्रभागे तथा करोति। एवं कृते सन्धित्रयं मध्ये संपद्यते, तद् दर्भसूत्रं द्विगुणं कृत्वा अन्ते ग्रन्थिः कार्यः। अनेन बर्हिर्बध्यते। अत एतद् बर्हिःसंनहनं नाम शुल्बनामकम् ॥

९०. **इध्मसन्नहनम्**—एवमिध्मबन्धनार्थं इध्मसंनहनं नाम शुल्ब-नामकम् ॥

९१. **परिधयः**—बर्हिः संभरणानन्तरम् अध्वर्यु रिध्मदेशं गत्वा असिदेन श्वपरशुना वा इध्मं छिनत्ति तूष्णीम्, तस्मिन्नेकविंशतिसंख्याकानि काष्ठानि भवन्ति। तत्र त्रितयं काष्ठानामाहवनीयस्य पश्चाद् दक्षिणत उत्तरतश्च प्रथममेखलाया उपरि स्थापनार्थं मेखलापरिमितायामम् परित आहवनीयस्य निधानात् पुरस्तात्सूर्यस्य मनसा परिधित्वकल्पनात् परिधिसंज्ञकं भवति ॥

९२. **समिधः**—अन्यानि काष्ठानि [1]प्रादेशमात्राणि। तत्र पञ्चदश-सामिधेन्यर्थानि। एकमनुयाजार्थं द्वे आहवनीयायतनस्यान्तरूर्ध्वाग्रे दक्षिणो-त्तरयोर्भागयो रोपणार्थे। एतान्यष्टादश काष्ठानि समित्पदवाच्यानि ॥

---

१. प्रसृताङ्गुष्ठकनिष्ठापरिमाणः। द्र०—अमरकोश २।६।३४॥

९३. **इध्मानि**—क्वचिद्विकृतीष्ट्यादिषु अधिका अपि समिधः सामिधेनीवृद्धा गृह्यन्ते एवमेकविंशतिदारुकः संघ इध्मपदवाच्यः ॥

९४. **इध्मप्रव्रश्चनानि**—इध्मस्य छेदनकाले यानि काष्ठशकलानि इतस्ततः पतन्ति तानि करणव्युत्पत्त्या इध्मप्रव्रश्चनपदेनाभिधीयन्ते ॥

९५. **अन्वाहार्यः**—चतुर्णामप्यृत्विजां भोजने पर्याप्तः दक्षिणाग्नौ सुशृत ओदनः अनु पश्चात् यागानन्तरमृत्विग् भोजनार्थमाह्रियते इति कर्मव्युत्पत्त्या अन्वाहार्यपदवाच्यः ॥

९६. **अन्वाहार्य स्थाली, अन्वाहार्यपचनी वा**—अन्वाहार्य ओदनो यस्यां स्थाल्यां श्रप्यते सा अन्वाहार्यस्थालीत्युच्यते ॥

९७. **मदन्ती**—मदन्तीनामिका आपो यस्मिन् पात्रे संताप्यन्ते, तत्पात्रमपि मदन्तीपदेन व्यवह्रियते ॥

९८. **फलीकरणम्**—पुरोडाशचरुसंबन्धिव्रीह्यादीन् उलूखले मुसलेनावहत्य पत्नी शूर्पेण निस्तुषकरणरूपं फलीकरणं करोति । तत्र ये तुषादयः-पतन्ति ते करणव्युत्पत्त्या फलीकरणपदवाच्याः ॥

९९. **फलीकरणपात्रम्**—तेषां यागानन्तरं दक्षिणाग्नौः जुह्वा चतुर्गृहीतेनाज्येन सह होमो विहितः। अतः यागसमाप्तिपर्यन्तं तेषां [फलीकरणानां] स्थापनाय निर्मितं अश्वत्थमयं पात्रं फलीकरणपात्रमित्युच्यते ॥

१००. **अन्तर्धानकटम्**—यदा गार्हपत्ये अध्वर्युः पत्नीसंयाजैः प्रचरति तदा देवानां पत्नीयागकाले स्वीयहविर्भागग्रहणार्थमागतानां देवानां पत्नीनां स्त्रीत्वाल्लज्जया तिरोधानाय अश्वत्थकाष्ठनिर्मितं तिरोधानकरणयोग्यं कटाकारत्वात् अन्तर्धानकटमित्युच्यते ॥

१०१. **इडाजपः**—अध्वर्युस्तीर्थप्रवेशानन्तरं गार्हपत्यस्योत्तरत उपविश्य इडाजपं कृत्वा **'देवा गातुविद'** इत्यृचं जपति तस्यामृचि यतो वातशब्दो वर्तते श्रुतौ वातशब्देन यागारम्भसमाप्तयोर्वर्णनात् **'इडा देवहूः'** इति यजुर्मन्त्रजप इडाजपपदेनोच्यते ॥

१०२. **पाणिसंमर्शनम्**—तत आहवनीयस्योतरतस्तिष्ठन् हस्तौ मन्त्रेण संमृशते । एतत्कर्म पाण्योः सावधानत्वाय करिष्यमाणकर्मसुप्रेरणारूपं पाणिसंमर्शनमित्युच्यते ॥

१०३. **परिस्तरणम्**—तत[1] ग्राहवनीयदक्षिणाग्निगार्हपत्यान् क्रमेण दर्भैः परिस्तृणाति। 'अग्नेः षोडशभिर्दर्भैः प्राच्यादिषु परिस्तृतिः' इति वचनात् प्राच्यां प्रथममेखलोपरि चतुर्भिर्दर्भैस्तथैव दक्षिणस्यां प्रतीच्यामुदीच्यां च क्रमेण स्तरणं परिस्तरणपदार्थः ॥

१०४. **पात्रासादनम्**—ततो गार्हपत्यस्य पुरस्ताद् वेद्यां [2]परिभोजनीय-दर्भानास्तीर्य तेषु द्वन्द्वं न्यञ्चि प्रक्षालितानि यज्ञपात्राणि प्राक्संस्थानि उदगपवर्गाणिस्थापयति। तदेतत्कर्म पात्रासादनपदार्थः ॥

१०५. **पृष्ट्यास्तरणम्**—ततो ब्रह्मणि स्वायतने उपविष्टे यजमानेन च समन्त्रकद्वितीयवरणेन वृते परिभोजनीयदर्भैः संततां पृष्ठ्यां गार्हपत्यमध्या-दारभ्याहवनीयमध्यपर्यन्तं स्तृणाति मन्त्रेण। एतत् कर्म पृष्ठ्यास्तरणमि-त्युच्यते ॥

१०६. **पवित्रकरणम्**—ततो मन्त्रेण पूर्वं निरुक्तं पवित्रमादाय समन्त्रकं सव्यहस्ते पवित्रं धृत्वा दक्षिणहस्तेन जलेनानुमार्ष्टि। एतत्कर्म पवित्रकरणं नाम ॥

१०७. **अभिमर्शनम्**—अभिमर्शनं नाम यदभिमृशेदिति विधीयते मन्त्र-जपसमकालं तत्पदार्थस्पर्शनम ॥

१०८. **दशहोतृपदानि**—[3]चित्तिरित्यादीनि दश वाक्यानि दशहोतृपद-वाच्यानि ॥

१०९. **निर्वापः**—अध्वर्युः पवित्रवत्यामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तया शूर्पे तन्मुष्टिमात्रं व्रीह्यादिकं प्रक्षिपति। एतत्कर्म निर्वापपदवाच्यम् ॥

११०. **प्रोक्षणम्**—ततः सशूकायामेवाग्निहोत्रहवण्यां तिरःपवित्रमप आनीय त्रिरुत्पूय [4]उन्महयन्नुपस्थायतेन जलेन सपवित्रेणोत्तानेन दक्षिण-पाणिना सेचनं पुरोडाशीयादीनां[5] यत् तत् प्रोक्षणमित्युच्यते ॥

१११. **यज्ञायुधानि यज्ञपात्राणि वा**—स्फ्यः कपालानि अग्निहोत्रहवणी

---

१. कर्कदेवयाज्ञिकादयस्तु कार्यक्रमेणाग्नीनां परिस्तरणमाहुः। तेन आदावाहव-नीयस्य परिस्तरणं ततो गार्हपत्यदक्षिणाग्न्योरिति क्रमः कर्काद्यनुयायिनाम्।

२. परिभोजनीय पदार्थः—द्र० पृष्ठ ३१, टि० १।

३. चित्तिः स्रुक्, चित्तमाज्यम्, वाग्वेदिः, आधीतं बर्हिः, केतो अग्निः, विज्ञातमग्निः, वाक्यतिहोता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युः। दर्शपूर्णमास। प्रकाश, पृष्ठ ५२९। ४. उन्महनपदार्थः—११३। ५. हविषामित्यर्थः।

शूर्पं कृष्णाजिनं शम्या उलूखलं मुसलं दृषत् उपला जुहूः उपभृत् स्रुवः ध्रुवा प्राशित्रहरणं इडापात्रं मेक्षणं पिष्टोद्वपनी प्रणीताप्रणयनं आज्यस्थाली वेदः दारुपात्री योक्त्रं वेदपरिवासनानि धृष्टिः इध्मप्रव्रश्चनानि अन्वाहार्यस्थाली मदन्ती फलीकरणपात्रं अन्तर्धानकटं च एते पदार्था अन्ये च ये विकृतिषु उपयुक्तास्ते सर्वे यज्ञायुधपदेन यज्ञपात्रपदेन च श्रुतौ गीयन्ते ॥

११२. **उत्पवनम्**—उत्पवनं नाम द्रवद्रव्यस्याज्यादेः कस्मिंश्चित्पात्रे स्थितस्य दक्षिणोत्तराभ्यां हस्ताभ्यां परस्परम् असंसृष्टे पवित्रे धृत्वा ताभ्यां तस्य द्रव्यस्य ऊर्ध्वभागे प्लवनम् उत्पवनमित्युच्यते ॥

११३. **उन्महनम्**—उन्महनं नाम स्तुतियुक्तमन्त्रोच्चारणेन पूजनरूपम् ॥

११४. **समाहननम्**--समाहननं नाम आग्नीध्रकर्तृकं शम्याकरणकं यज्ञपात्राणां वादनम् ॥

११५. **परावपनम्**—परावपनं नाम अध्वर्युकर्तृकं व्रीह्यादीनामुलूखले अवहतानां शूर्पेण फलानामन्तरेऽवस्थितिर्यथा स्यात् तथा तुषादेर्निरसनम् ॥

११६. **यज्ञयोगमन्त्रः**—व्रीह्यादेरवघातानन्तरं यजमानो यं मन्त्रं किंशब्दवन्तं जपति स मन्त्रो यज्ञयोगमन्त्र इत्युच्यते ॥

११७. **अधिवपनम्**—पुरोडाशीयानां पेषणार्थं दृषदि स्थापनमधिवपनमित्युच्यते ॥

११८. **प्रोहणम्**—दृषदि अध्युप्तानां पुरोडाशीयतण्डुलादीनामुपर्युभाभ्यां हस्ताभ्यामुपलायाः तिर्यक्स्थापितायाः पूर्वस्यां दिशि कर्षणं ततः प्रतीच्यां कर्षणं च प्रोहणमित्युच्यते ॥

११९. **प्रस्कन्दनम्**—दृषदः सकाशात् उपलया पिष्टानां दृषदधःस्थापितकृष्णाजिने पातनम्, यस्य कस्यापि द्रव्यस्य पात्रात् हस्ताद्वाऽधः पतनं च प्रस्कन्दनमित्युच्यते ॥

१२०. **कपालोपधानम्**—अध्वर्युः पेषणानन्तरं गार्हपत्यस्य पश्चात् धृष्टचा पुरोडाशभर्जनार्थं गार्हपत्याङ्गारैः संतापयितुं यथाविहितानि प्रतिपुरोडाशं समुदितानि अश्वशफमात्राण्यश्वशफाकारतामापन्नानि कपालानि मन्त्रैर्विहितक्रमेण स्थापयति । तदेतत्कपालोपधानमित्युच्यते ॥

१२१. **उपधानम्**—उपधानं नाम 'उपधानं तूपबर्हः शय्यायां शयनीयवद्' इति कोशात् (अमर २।६।३९) कस्यचित्पूजनीयस्य पदार्थस्य स्थापनार्थं उपबर्हस्थानीयाधाररचनम् ॥

१२२. **पत्रासादानम्**—एवमासादनं नाम यज्ञपात्रदीनां सुशोभिततया रचनम् ॥

१२३. **निधानम्**-निधानं यथाकथंचित् स्थापनमात्रम् ॥

१२४. **योगः**—उपहितानि कपालानि येन मन्त्रेण परस्परसंयुक्तानि क्रियन्ते, स मन्त्रो योग इत्युच्यते ॥

१२५. **अधिश्रयणम्**—अधिश्रयणं नाम वह्नौ स्थापयित्वा संतापनम् ॥

१२६. **परिकर्म**—'परिकर्माङ्गसंस्कार' इति कोशात् (अमर २।३।२२) परिकर्मशब्द ऋत्विग्यजमानभिन्नस्य कर्तव्यत्वेन विहितस्य कर्मणो वाचकः ।

१२७. **परिकर्मी**—तत्कर्मकर्ता परिकर्मी भवति ॥

१२८. **अनुमन्त्रणम्**—अनुमन्त्रणं नाम स्वयमन्येन वा कर्मणि कृते पश्चात् तत्कर्मकरणमन्त्रोच्चारणम् ॥

१२९. **मन्त्रः**—'मन्त्राश्च कर्मकरणाः' (आश्व० श्रौत १।१।२१) इति सूत्रात् यैः कर्म क्रियते ते मन्त्रपदवाच्याः ॥

१३०. **निर्वापः**—गार्हपत्यस्य पश्चात् शकटं स्थापितं भवति । तत्र विद्यमानस्य व्रीह्यादिद्रव्यस्य सपवित्रायामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तया मन्त्रेण कांचिद् देवतामुद्दिश्य शूर्पे प्रक्षेपोऽथवा शकटाभावपक्षे गार्हपत्यस्य पश्चादुदगग्रं स्फ्यं निधाय तदुपरि दारुपात्रीं प्रागग्रां निधाय तस्यां पुरोडाशीयानोप्य तस्याः सकाशात् गृहीत्वा अग्निहोत्रहवण्यां निधाय पूर्ववत् शूर्पे प्रक्षेपणं निर्वाप इत्युच्यते ॥

१३१. **अनधःसादनम्**—यत्र 'अनधः सादयति' इति विधीयते तत्र दर्भतृणादिकं किंचित् निधाय तदुपरि स्थापनम् अधःसादनमुच्यते ॥

१३२. **अभिमन्त्रणम्**—'गार्हपत्यमभिमन्त्रयते' इत्यादौ अभिमन्त्रणं नाम गार्हपत्यादेरवेक्षणसमकालं मन्त्रजपः ॥

१३३. **प्रोच्छनम्**—यस्मिन् यागे व्रीह्यादेर्द्रव्यस्य निर्वापानन्तरमन्यद्रव्यनिर्वापः कर्तव्यो भवति, तत्र एकस्य निर्वापानन्तरं निर्वापे करणभूताया अग्निहोत्रहवण्या वस्त्रादिना संमार्जनं पश्चान्निरुप्यमाणद्रव्ये पूर्वनिरुप्तद्रव्यसंबन्धितुषादिसंसर्गाभावार्थं क्रियते तत्, यच्च तादृशयागे निरुप्तद्रव्यप्रोक्षणात् प्राग्वस्त्रसंमार्जनं तदपि प्रोच्छनमित्युच्यते ॥

१३४. **प्रोक्षण्यः**--व्रीह्यादिप्रोक्षणार्थम् अग्निहोत्रहवण्यां गृहीताः संस्कृता आपः प्रोक्षणीपदवाच्याः ॥

१३५. **तूष्णीम्**—मन्त्रं विना क्रियमाणं कर्म तूष्णीमित्युच्यते ॥

१३६. **हविष्कृत्**—हविः करोतीति हविष्कृदिति व्युत्पत्त्या ऐष्टिकादिकर्मणि अध्वर्योः कार्ये हविःसंपादने सहायत्वमात्रेण, सोमे तु सवनीयनिर्वापप्रभृतिपुरोडाशाद्यासादनान्तस्य हविःसंपादनस्य स्वकर्तृकत्वेन, सोमाङ्गभूते प्रवर्ग्याख्ये कर्मणि रौहिणसंज्ञकपुरोडाशाधिश्रयणादिकर्मकर्तृत्वेन च आग्नीध्र एव हविष्कृत्पदवाच्यः ॥

१३७. **समाहननम्**—समाहननं नाम यज्ञपात्राणां तूष्णीं शम्या ताडनम्, तत्र दृषदुपलयोस्तु त्रिः समन्त्रकम् ॥

१३८. **अवहननम्**—अवहननं नाम उलूखले उप्तानां व्रीह्यादीनां नैस्तुष्यसिद्ध्यर्थं मुसलेन कण्डनम् ॥

१३९. **परापवनम्**—परापवनं नाम कण्डनेन पृथग्भूतानां तण्डुलादीनामेव शूर्पे स्थितिर्यथा स्यात् तुषादीनां तु अधःपतनम्, तथा कौशलेन शूर्पचालनम् ॥

१४०. **आप्लावनम्**—पात्रीस्थानां पिष्टानामुपरि संतप्तमदन्तीजलप्रक्षेप आप्लावनमित्युच्यते ॥

१४१. **संयवनम्**—मेक्षणेन जलपिष्टयोर्मिश्रणं संयवनमुच्यते ॥

१४२. **पुरोडाशः**—मदन्तीजलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थ्यन्तदेवतानामपूर्वकत्वेतिपदान्तेन मन्त्रेण अभिमर्शनानन्तरं कूर्मवदाकारे कृते पुरोडाशपदवाच्यता ॥

१४३. **प्रत्यूहनम्**—गार्हपत्यादेः सकाशाद् बहिष्कृतानामङ्गाराणां पुनर्गार्हपत्यादौ प्रक्षेपः प्रत्यूहनम् ॥

१४४. **प्रथनम्, त्वग्ग्रहाणं च**—पुरोडाशस्य सर्वकपालस्पर्शनं प्रथनमित्युच्यते। पुरोडाशस्य त्वक्सिद्ध्यर्थं पिष्टोद्वपनीस्थजलेन सर्वतः संमर्शनं त्वग्ग्राहणमित्युच्यते ॥

१४५. **पर्यग्निकरणम्**—हविषामासमन्तात् प्रादक्षिण्येन उल्मुकस्य परिभ्रामणं पर्यग्निकरणमित्युच्यते ॥

१४६. **अभिवासनम्**—संतप्तेषु कपालेषु निहितस्य पुरोडाशस्य गार्हपत्यस्य भस्मना तूष्णीं प्रच्छादनम् अभिवासनमित्युच्यते ॥

१४७. **पुरोडाशश्रपणम्**— ततोऽध्वर्युर्मन्त्रेण साङ्गारं भस्म वेदेन पुरो-

डाशस्योपरि प्रक्षिप्य परिकर्मिणः संप्रेष्यति। ते च [परिकर्मिणो] यथा सुशृतः स्यात् तथा श्रपयन्ति। तदेतत् पुरोडाशश्रपणमित्युच्यते ॥

१४८. चरुः—गार्हपत्याङ्गारान् मन्त्रेण गार्हपत्यायतनाद् बहिः पश्चान्निरूह्य ते चाङ्गारा यथा मध्ये स्युस्तथा चुल्लीं स्थापयित्वा तस्यां नपुंसकलिङ्गस्थाने स्त्रीलिङ्गवत्पदघटितप्रथमकपालोपधानमन्त्रेण सजलां स्थालीमधिश्रित्य, तस्यां मन्त्रेण पूर्वसंस्कृतानां तण्डुलानां प्रक्षेपणं क्रियते। ते च परिपक्वास्तण्डुलाः चरुपदवाच्याः ॥

१४९. पयसिचरुः—यदि पयःसहितां स्थालीमधिश्रित्य चरुः साध्यते, तदा स पयसिचरुरित्युच्यते ॥

१५०. प्रतिपत्तिकर्म—हविःश्रपणानन्तरं पात्रीसंक्षालनोदकं गार्हपत्योल्मुकेनाभितप्यान्तर्वेदि पस्येन प्राचीस्तिस्रो लेखाः कृत्वा प्रत्यक् त्रिर्निनयति त्रिभिः स्वाहान्तैर्मन्त्रैः। एतादृशं कर्म अन्यत्रापि क्रियमाणं यथा 'उल्मुकं प्राच्यां निरस्येद्' इत्यादौ कस्यचिद्वस्तुनो जाते कार्ये विधिप्राप्तविनियोगकरणं प्रतिपत्तिकर्मेत्युच्यते ॥

१५१. पूर्वपरिग्राहः—अध्वर्युर्मन्त्रेण वेदमादाय मन्त्रेण सकृत् द्विस्तूष्णीं वेदेन उदगपवर्गं प्रागवसन्नं वेदिं संमृज्य, वेद्याः पश्चादुपविश्य मन्त्रेण दर्भाभ्यां सह स्फ्यमादाय अन्यतरेण दर्भेण स्फ्यं निमृज्य, अवशिष्ट दर्भं वेदिपूर्वतृतीयभागे मन्त्रेण उदगग्रं निधाय, मन्त्रेण तस्मिन् स्फ्येन प्रहृत्य मन्त्रेण मृदासहितं स्फ्यमादाय मन्त्रेण मृदं हृत्वा मन्त्रेण वेदिमवेक्ष्य मन्त्रेण मृदमुत्करे निवपति। आग्नीध्रस्तां मृदं तत्रैवोत्तानाभ्यां पाणिभ्यां गृह्णाति एवं प्रहरणादि मृन्निवपनान्तं सममन्त्रिकं त्रिवारं कृत्वा तूष्णीं चतुर्थं करोति। तत्र चतुर्थे मृदो हरणे प्रहृतस्य दर्भस्थापितया सह हरणं क्रियते। तदनन्तरं मन्त्रेण स्फ्येन वेदिदक्षिणांसमारभ्य दक्षिणश्रोणिपर्यन्तं वेदिदक्षिणप्रान्तं स्पृशति, तथैव दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं वेदिपश्चिमप्रान्तं स्पृशति, तथैव उत्तरश्रोणिमारभ्य उत्तरांसपर्यन्तं वेद्युत्तरप्रान्तं स्पृशति। इदं स्फ्येन वेदिप्रान्तभागस्पर्शनं वेद्याः परितो यागार्थं करणरूपत्वात् उत्तरपरिग्राहापेक्षया पूर्वत्वाच्च पूर्वपरिग्राह इत्युच्यते ॥

१५२. वेदिकरणः (मन्त्रः)—पूर्वपरिग्राहानन्तरं यं मन्त्रं जपति स मन्त्रो 'वेदिः क्रियते अनेन' इति करणव्युत्पत्त्या वेदिकरण इत्युच्यते ॥

१५३. उद्धननम्—वेदिकरणजपानन्तरं स्फ्येन मंत्रेण प्राक्संस्थं वेदिं त्रिः खनति। एतादृशं खननम् उद्धननमित्युच्यते ॥

१५४. **उत्तरपरिग्राहः**—अध्वर्युप्रेषित आग्नीध्रः उद्धतदेशात् त्रिर्मृदम् उद्धृत्य उत्करे निवपति। ततोऽध्वर्युरुत्तरपरिग्राहग्रहणार्थं ब्रह्माणमनुज्ञापयति। तेनानुज्ञातः पूर्ववत् स्फ्येन अन्यैस्त्रिभिर्मन्त्रैर्दक्षिणपश्चिमोत्तरप्रान्तभागान् स्पृशति एतत्स्पर्शनं पूर्वपरिग्राहापेक्षया उत्तरत्वादुत्तरपरिग्राह इत्युच्यते॥

१५५. **वेदिकरणम्**—उत्तरपरिग्राहानन्तरम् उत्करे न्युप्तां मृदं वेद्यामानीय स्फ्येन मन्त्रेण समीकरोति। वेदिसंमार्जनप्रभृति समीकरणपर्यन्तं वेदेः करणमिति व्युत्पत्त्या वेदिकरणमित्युच्यते॥

१५६. **समित्**—पलाशस्य अन्यस्य वा यज्ञियवृक्षस्य प्रादेशपरिमाणं काष्ठं समित्पदवाच्यम्॥

१५७. **आज्यावेक्षणम्**—अध्वर्युप्रेरणया वेद्यां विद्यमानस्य आज्यस्य समन्त्रकम् अधोमुखतया यजमानकर्तृकमीक्षणम् आज्यावेक्षणमित्युच्यते॥

१५८. **पुनराहारः**—'आज्यं पुनराहारमुत्पुनाति' इत्यत्र पवित्राभ्यामाज्यं प्राङ् नीत्वा पुनः पश्चादानयनं पुनराहारपदवाच्यम्॥

१५९. **आज्यग्रहणम्**—आज्यस्थाल्या उत्तरतो वेद्यां प्रागग्रमुदगग्रं वा वेदं निधाय तस्मिन् प्रागग्रां जुहूं स्थापयित्वा तस्यां मन्त्रावृत्त्या आज्यस्थाल्याः सकाशात् स्रुवेणाज्यं गृह्णाति, यजमानः प्रतिग्रहणमनुमन्त्रयते। अध्वर्युर्दक्षिणहस्तेन जुहूं संमृज्य परिकर्मिणे प्रयच्छति। स च प्रणीतोत्तरतः स्थापितयोरिध्मबर्हिषोः पश्चिमदेशे जुहूप्रभृतिः स्रुच उदक्संस्थाः स्थापयति। अध्वर्युः पूर्ववत् उपभृति आज्यं अष्टकृत्वो गृह्णाति। ततस्तथैव संमृज्य पूर्ववत् प्रयच्छति। स च परिकर्मी तथैव सादयति। अध्वर्युः पूर्ववत् चतुष्कृत्वो ध्रुवायामाज्यं गृह्णाति, तूष्णीं पूरयति, तथैव प्रयच्छति। अन्यश्च तथैव सादयति। तदेतत्कर्म आज्यग्रहणमित्युच्यते॥

१६०. **बर्हिरास्तरणम्**—प्रोक्षणीनामुन्महनादि कृत्वा, समन्त्रकम् इध्मवेदिबर्हींषि क्रमेण प्रोक्ष्य, बर्हिरिध्मप्रणीतयोर्मध्येन प्राङ् नीत्वा, प्रणीताऽऽहवनीययोर्मध्येन पुनराहृत्य, वेद्यां पुरोग्रन्थ्यूर्ध्वाग्रं निधाय, तिष्ठन्नग्राणि मन्त्रेण प्रोक्ष्य, प्रह्वो मन्त्रेण मध्यानि प्रोक्ष्य, आसीनो मन्त्रेण मूलानि प्रोक्ष्य, प्रत्यङ्मुखाभ्यां स्रुक्पाणिभ्यां ग्रन्थिमासिच्य, शिष्टं दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं प्रथमं प्रस्तरं गृहीत्वा मन्त्रेण मन्त्रेण निनयति। ततः प्रोक्षणीधानं निरस्यं, बर्हिर्विस्रस्य, मन्त्रेण तस्मिन् पवित्रे संयोज्य, प्रस्तरं यजमानाय ब्रह्मणे वा दत्त्वा, बर्हिःसन्नहनं विस्रस्य, दक्षिणश्रोणिमारभ्य

उत्तरांसपर्यन्तं निधाय, तदुपरि प्रथमं दर्भमुष्टिं मन्त्रेण स्तृणाति। तस्य पश्चात् द्वितीयं प्रागास्तृतदर्भमूलानि आच्छादितानि यथा स्युः, ततस्तृतीयं तथैव स्तृणाति। तदेतत्कर्म बर्हिरास्तरणं नाम ॥

१६१. **अग्निपरिधानम्**—ततः प्रस्तरं गृहीत्वा प्राङभिसृप्य मन्त्रेण आहवनीयस्य पश्चात् प्रथममेखलोपरि उदगग्रं मध्यमं परिधिं परिदधाति। यजमानोऽनुमन्त्रयते। एवं दक्षिणोत्तरौ परिधी दक्षिणोत्तरयोः क्रमेण प्रागग्रौ स्थापयति। अग्रे सूर्यमन्त्रेण परिधिं कल्पयति। एतत्कर्म अग्निपरिधानमित्युच्यते ॥

१६२. **विधृतिः**—परिभोजनीयेभ्यो[1] मध्यमबर्हिर्मुष्टेर्वा अन्यतो वा आहृतं सारं दर्भद्वयं विशेषेण धृतिः धारणं, प्रस्तरादीनां धारणं यस्मिन् इति व्युत्पत्त्या विधृतिपदवाच्यम् ॥

१६३. **स्रुगासादनम्**—ते च विधृती वेद्यां मन्त्रेण उदगग्रे निधाय, तयोरुपरि मन्त्रण प्रागग्रं प्रस्तरं [निधाय] तदुपरि मन्त्रेण जुहूं प्रागग्रां, तस्या उत्तरतो विधृत्यारधस्तात् मन्त्रेणोपभृतं,तदुत्तरतस्तथैव ध्रुवां निधाय,मन्त्रेणाभिमृशति तदेतत् स्रुगासादनमुच्यते ॥

१६४. **अपोहनम्**—स्रुगासादनानन्तरं स्रुचामुत्तरतः सस्रुवामाज्यस्थालीं निधाय, सर्वाण्याज्यान्यभिमन्त्र्य, दक्षिणेन सस्रुवामाज्यस्थालीं सव्येन दारुपात्रीं वेदं चादाय प्रदक्षिणमावृत्य, प्रत्यङ् आहृत्य, गार्हपत्यस्य पश्चादुपविश्य, दारुपात्र्यां पुरोडाशसंख्यया मन्त्रावृत्योपस्तृणाति। ततः प्रथमं दक्षिणपुरोडाशस्याङ्गारानपोहति। तत्र अपोहनं नाम पूर्वं प्रक्षिप्तानां भस्ममिश्राङ्गाराणां घृष्टया दूरीकरणम् ॥

१६५. **पुरोडाश-प्रकाशनम्**—मन्त्रेण पुरोडाशस्य प्रकटीकरणं पुरोडाशप्रकाशनमुच्यते ॥

१६६. **पुरोडाशोद्वासनम्**—ततो वेदेन विरजसं कृत्वाऽभिधार्य मन्त्रेण पात्र्याः सकाशात् पुरोडाशमुद्गृह्णाति। इदं पुरोडाशोद्वासनमुच्यते ॥

१६७. **[पुरोडाशस्य] आर्द्रीकरणम्**—ततो मन्त्रेण पुरोडाशस्योपरि सर्वत आज्यप्रक्षेप आर्द्रीकरणमित्युच्यते ॥

१६८ **अधस्तादभ्यञ्जनम्**—तथैव ततः अधोभागे आज्यलेपनम् अधस्तादभ्यञ्जनमित्युच्यते ॥

---

१. शास्त्रीयलवनादिसंस्काररहिताः दर्भाः। एतादृशदर्भाणां मुष्टिरपि 'परिभोजनीया' इत्युच्यते।

१६९. **हविरासादनम्**—ततः पुरोडाशं पात्र्यां तूष्णीं निधाय अन्यानपि पुरोडाशादीन् एवमेव उद्वास्य पात्र्यां निधाय स्रुवमभिपूर्य पुरोडाशयोर्मध्ये स्थापयित्वा सर्वाणि हवींष्यादाय वेदिमध्ये स्रुचां पश्चात् तूष्णीं सादयति यजमानस्तु व्याहृतिमन्त्रेण । एतद् हविरासादनमित्युच्यते ॥

१७०. **आमन्त्रणम्**—आमन्त्रणं नाम संबोधनप्रथमान्तपदोच्चारणानन्तरम् 'एहि' इत्यस्यानुषङ्गेणाकारणम् ॥

१७१. **अवस्थानम्**—'प्रागुदगाहवनीयादवस्थाय' इत्यादौ अधोमुखतया स्थानम् अवस्थानमित्युच्यते ॥

१७२. **यज्ञोपवीतम्**—'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे'[1] इति कोशात् दक्षिणबाहुना उद्धृतं सव्यांसस्थितं स्मृत्युक्तरीत्या निर्मितं यज्ञोपवीतमित्युच्यते ॥

१७३. **प्राचीनावीतम्**—एतद्विपरीतं सव्योद्धृतं दक्षिणांसस्थितं [2]प्राचीनावीतमित्युच्यते ॥

१७४. **निवीतम्**—मालावत् कण्ठलम्बितं [3]निवीतमित्युच्यते ॥

१७५. **आचमनम्**—केशवादिभिस्त्रिभिर्नामभिश्चतुर्थ्यन्तैरुदकं[4] ब्राह्मेण तीर्थेन पीत्वा, द्वाभ्यां करौ प्रक्षाल्य, द्वाभ्यामोष्ठौ संमृज्य, द्वाभ्यां मुखमवाङ्निमृज्य, एकेन वामकरं प्रक्षाल्य, एकेन पादौ संप्रोक्ष्य, एकेन मूर्धानं संस्पृश्य, एकेन ऊर्ध्वोष्ठमङ्गुल्यग्रैः संमृज्य, द्वाभ्यां क्रमेण अङ्गुष्ठतर्जनीभ्यां दक्षिणवामनासारन्ध्रे संमृज्य, द्वाभ्यां क्रमेण दक्षिणवामाक्षिणी अङ्गुष्ठानामिकाभ्यां निमृज्य, द्वाभ्यां क्रमेण दक्षिणवामश्रोत्रे अङ्गुष्ठकनिष्ठिकाभ्यां संमृज्य, एकेन अङ्गुल्यग्रैर्नाभिं संमृज्य, एकेन पाणितलेन हृदयम्, एकेन अङ्गुल्यग्रैः शिरः संमृज्य, द्वाभ्यां क्रमेण तैरेव दक्षिणवामभुजौ संमार्ष्टि । तदेतत्स्मृत्युक्तम् आचमनमित्युच्यते ॥

१७६. **दक्षिणावृत्**—दक्षिणेनाङ्गेन य आवर्त्तते पर्यावृत्तो भवति स दक्षिणावृदित्युच्यते ॥

१७७. **सव्यावृत्**—एवं सव्येनावर्तमानः सव्यावृत्पदवाच्यः ॥

---

१. अमरकोश २।७।४९ ॥ २. वही, २।७।४९ ॥

३. वही, २।७।४९ ॥

४. नैतत् श्रौतसूत्रेषु दृश्यते । अत एव ग्रन्थकारेणान्ते 'स्मृत्युक्तम्' इति निर्दिष्टम् । मनुस्मृतौ तु ब्राह्मतीर्थेन अपां पानमात्रमाचमनं विहितम् ।

१७८. **अङ्कधारणा**—सव्योत्तरिणोपस्थेन दक्षिणोत्तरिणोपस्थेन वा आसनम् अङ्कधारणापदवाच्यम् ।।

१७९. **विहाराव्यावृत्तिः**—विहारसंमुखं स्वपृष्ठभागो यथा न भवेत् तथा कर्मकाले इतस्ततो गमनं विहाराव्यावृत्तिरित्युच्यते ।।

१८०. **पार्ष्णी**—'वेदिश्रोण्योत्तरया पार्ष्णीं समां निधाय' इत्यादौ 'तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णीरधस्तयोः'[1] इत्यमरकोशात् पुंल्लिङ्गोऽपि अत्र स्त्रीलिङ्गः पार्ष्णीशब्दो घुटिकाधोभागवाचकः ।।

१८१. **प्रपदः**—'प्रपदेन बर्हिराक्रम्य' इत्यादौ प्रपदशब्दः 'पादाग्रं प्रपदं पादः'[2] इति कोशात् अङ्गुलिपश्चाद्भागस्य पादाग्रस्य वाचकः ।।

१८२. **आक्रमणम्**--तत्रैव आक्रमणं नाम बर्हिष उपरि प्रपदस्थापनम् ।।

१८३. **अवकर्षणम्** —'अङ्गुल्यग्राण्यवकृष्य' इत्यत्र अवकर्षणं नाम आकुञ्चनम् ।।

१८४. **प्रतिसंधानम्**—एवं 'प्रति संदध्याद्' इत्यत्र प्रसारणं प्रतिसंधानमित्युच्यते ।।

१८५. **सामधेनीः**—'सामिधेनीरन्वाह' इत्यादौ अध्वर्युप्रेषितो होता उत्तरया वेदिश्रोण्या समां पार्ष्णीं निधाय प्रपदेन बर्हिराक्रम्य संहितौ करौ हृदयदेशे अङ्कदेशे वा प्राञ्चौ धारयन् प्राङ्मुखस्तिष्ठन् प्रकृतौष्टौ पञ्चदश, विकृतौ पाशुकादौ च ताभ्यो न्यूना अधिका वा या ऋचो **मन्द्रस्वरेण पठति**, ता ऋचः समिधाः आधीयन्ते याभिरिति करणव्युत्पत्त्या सामिधेनीपदेनोच्यन्ते ।।

१८६. **अभिहिंकारः**—'अन्वाह' इत्यनुवचनं विधीयते । तत्र सामिधेनीनामनुवचने ऋक्पाठात्पूर्वं त्रिमात्रं 'हिं' इत्युच्चार्य उपांशुसंहितया प्रणवान्ता व्याहृतीः पठति । तस्य उच्चैरुपांशुपठ्यमानस्य समुदितस्य आश्वलायनसूत्रे (१।२।३-४) व्यवहारार्थं अभिहिंकार इति संज्ञा कृता ।।

१८७. **अभ्यासः**—तदनन्तरं पठ्यमानायाः प्रथमाया ऋचः त्रिवारं पाठो विहितः, एवमन्तिमाया अपि । अस्य त्रिःपाठस्य तत्रैव सूत्रे अभ्यास इति संज्ञा कृता ।।

१८८. **अध्यर्धकारम्**—सामिधेनीनां प्रथमाया ऋचः द्वयोरर्धर्चयोः संहितया पाठः, ऋगन्ते टेः स्थाने त्रिमात्रः प्रणवः, तदन्ते मकारः, तेन च

---

१. अमरकोश २।६।२३ ।।  २. अमरकोश २।६।२२ ।।

मकारेण सह उत्तरस्या ऋचः प्रथमार्द्धर्चेन संधानं कार्यम्, समाप्ते द्वितीयसामिधेन्यर्द्धर्चे उच्छ्वासः कार्यः। एतदेकमवसानम्। ततः द्वितीयार्द्धर्चेन तृतीयसामिधेन्यर्द्धर्चं संधाय तेन च द्वितीयार्द्धर्चं प्रणवान्तं संधाय प्रणवान्तिममकारेण चतुर्थसामिधेन्यर्द्धर्चं, तस्मिन्नेवार्धर्चे उच्छ्वसेत्। एतद् द्वितीयमवसानम्। एवं च प्रथमोच्छ्वासे त्रयोऽर्धर्चाः, द्वितीये तु चत्वारः, संपद्यन्ते संकलनेन सप्त संपन्नाः। तत्र त्रिः पठ्यमानायाः प्रथमाया ऋचः षड् अर्धर्चाः द्वितीयस्या ऋच एकोऽर्धर्चः एतदनन्तरं प्रत्युच्छ्वासं द्वावर्धर्चौ भवतः। एवं प्रथमावत् उपान्त्याया द्वितीयार्धर्चमारभ्य तदीयप्रणवमकारेण अन्तिमाया अर्धर्चं संधाय, तेन च द्वितीयार्धर्चं संधाय तदन्तिमप्रणवेन उत्तरस्या अर्धर्चं संधाय तदन्ते विरमेत्। अन्तिमायां त्रिः पठ्यमानायाम् एतदेकमवसानम्, ततो द्वितीयार्धर्चमारभ्य तदन्तिमप्रणवमकारेण उत्तरस्या अर्धर्चं संधाय तेन च द्वितीयार्धर्चं संधाय तदन्तिमप्रणवमकारेण द्वादशाक्षरं [1]निगदभागं संधाय तदन्ते विरमेत्। एतत् अन्तिमायां द्वितीयमवसानम्। अनया रीत्या सामिधेनीनामाद्यन्त्ययोर्ऋचोः पठनम् अन्यासामृचामपेक्षया अधिकस्य अर्धर्चस्य एकैकस्मिन् उच्छ्वासे उच्चारणात् 'अध्यर्धकारमन्वाह' इति णमुलन्तेन अध्यर्धकारमित्यनेन पदेन आश्वलायनसूत्रे (१।२।१९) व्यवहृतम्॥

१८९. **सन्ततम्**—ऋगारम्भे प्रथमार्धर्चेऽवसाय ततो द्वितीयार्धर्चप्रणवमकारेण उत्तरस्या ऋचः प्रथमार्धर्चं संधाय तदन्ते विरमेत्। एवं सर्वा ऋचः पठित्वा अवशिष्टम् अन्तिमाया ऋचः द्वितीयार्धर्चं केवलं चतुर्मात्रप्रणवान्तं उक्त्वा विरमेत्। एतादृशं पठनं तत्रैव सूत्रे (२।२।६) संततमित्युच्यते॥

१९०. **अनुवचनम्**--एतस्य सामिधेन्यनुवचनस्य अध्यर्धकारं पठनरहितस्य अभिहिंकारपूर्वकस्य चतुर्मात्रप्रणवान्तस्य शस्त्रे याज्यायां निगदे अनुवचने अभिष्टवने संस्तवने च अतिदेशः आश्वलायनसूत्रे कृतः। अन्वाह अनुब्रूयात् इत्यादिशब्दैर्विहितम् अभिहिंकारपूर्वकम् अभ्यासविशिष्टं प्रथमाया ऋचः प्रथमार्धर्चे अवसाय, द्वितीयार्धर्चान्त्यप्रणवेन प्रथमाया एव ऋचः द्वितीयपाठगतप्रथमार्धर्चं संधाय तदन्तेऽवस्येत्। अनया रीत्या सर्वा ऋचः पठित्वा अन्तिमाया ऋचः तृतीयपाठगतद्वितीयार्धर्चस्य अन्ते चतुर्मात्रप्रणवविशिष्टस्य परिशेषात् केवलस्य तावन्मात्रस्य पठनं अनुवचनमित्युच्यते॥

१९१. **अन्तापत्तिः**—एकस्या ऋचः द्वयोर्वा ऋचोरनुवचने अभ्यासो न भवति। समिधेन्यनुवचने अध्यर्धकारं पठनं विशेषः। अनुवचनमात्रे अवसाने

---

१. 'अग्ने महां असि ब्राह्मण भारत'। द्र० आश्व० श्रौत १।२।१७॥

यः प्रणवः स चतुर्मात्रो भवति, अन्यत्र तु त्रिमात्र एव। तदन्तिमस्य मकारस्य स्थाने स्पर्शेषु परेषु तत्तद्वर्गस्थः पञ्चमो वर्ण आदेशो भवति, यवलेषु परेषु क्रमेण अनुनासिकायवला आदेशा भवन्ति, रेफोष्मसु परेषु अनुस्वार आदेशा भवति, अन्यत्र अविकृत एव मकारः। एतस्य विकारमात्रस्य आश्वलायनसूत्रे (१।२।१५) अन्तापत्तिरिति संज्ञा ॥

१९२. **एकश्रुतिः**—'एकश्रुति अनुब्रूयात्' इति उच्यते। तथा च अनुवचनमात्रे एकश्रुतिः सिद्धयति। तत्र एकश्रुतिर्नाम उदात्तानुदात्तस्वरितानां स्वराणामभावः ॥

१९३. **वाजनम्**—अध्वर्युः सामिधेन्यारम्भे एकां समिधमाहवनीये ऽभ्याधाय, प्रणवेप्रणवे द्वितीयाद्येकादश समिधो ऽभ्याधाय, उपान्त्यायाः प्रणवे तिस्रः समिधः सहैवाभ्याधाय आहवनीयस्योपरि प्रक्षिप्तानां समिधां प्रदीपनानुकूलवातोत्पादनार्थम् अन्तिमायाः ऋचः अभ्यासकाले वेदं त्रिवारं प्राक् कम्पयति। एतत् कम्पनम् वाजनमित्युच्यते ॥

१९४. **उपहननम्**—'ध्रुवाज्यात् स्रुवेणोपहत्य' इत्यादौ उपहननं ग्रहणमेवोच्यते ॥

१९५. **आघारः**—वह्नेः कंचिद् देशमारभ्य देशान्तरपर्यन्तं समन्त्रकं आज्यधाराया आहरणं प्रक्षेपणम् आघार इत्युच्यते ॥

१९६. **स्रौवाघारः, तिर्यगाघारो वा**—स्रुवस्याधस्ताद् वेदं धृत्वा तेन दक्षिणं परिधिमारभ्य उत्तरपर्यन्तं समन्त्रकम् आज्यधाराहरणं स्रौवाघार इति तिर्यगाघार इति चोच्यते ॥

१९७. **प्रादेशः**—'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते अङ्गुष्ठे'[1] इति कोशात् विस्तृताङ्गुष्ठाग्रमारभ्य विस्तृततर्जन्यग्रपर्यन्तः प्रादेश इत्युच्यते ॥

१९८. **प्रादेश-करणम्**—तस्य वेद्यां प्रागग्रतया मन्त्रेण स्थापनं प्रादेशकरणमित्युच्यते ॥

१९९. **व्यूहनम्**—प्रादेशकरणपर्याप्तवेद्यन्तर्गतभूमेः सकाशाद् वेद्यास्तृतबर्हिषः उदग्देशे वेद्यामेव नयनं व्यूहनमित्युच्यते ॥

२००. **प्रवराः**—सामिधेन्यनुवचनानन्तरं होतृकर्तृकम् प्रवरप्रवरणं विहितम्। तत्र प्रवरो नाम आश्वलायनादिभिः प्रवराध्याये यद् गोत्रस्य

१. अमर कोश २।६।३४ ॥

यावन्तः प्रकर्षेण वराः ऋषयः संबुद्धयन्तपदेन उक्तास्ते । ते यथा—शण्डिलानां शाण्डिलासितदैवलेति । तत्र क्षत्रियवैश्ययोर्यजमानयोः पुरोहितस्य प्रवरा ववतव्याः । प्रवरसंशये मानव इत्येव प्रवरो वक्तव्यः ॥

२०१. **प्रवरणम्**—तेषामुच्चारणं प्रवरणमित्युच्यते ॥

२०२. **निगदः**—प्रवरानन्तरम असर्वो निगदशेषो वक्तव्यः । तत्र गायत्र्यादिच्छन्दोरहितः ऋग्वेदे विहितः[1] यजुर्मन्त्रः निगद इत्युच्यते ॥

२०३. **देवताह्वानम्**—होता निगदपाठानन्तरम् द्वितीयान्तम् देवतावाचकं शब्दमुच्चार्य संबुद्धयन्तमग्निशब्दमुच्चार्य 'आवह' इति पदं प्लुताद्यक्षरं पठित्वा अवस्यति । ततः द्वितीयादिदेवतावाचिकानि पदानि पूर्ववत् अग्निपदरहिताति आवहशब्दान्तानि पठति । एतद्देवताह्वानमित्युच्यते ॥

२०४. **आवहननिगदः**—आह्वानानन्तरं त्रयोदशाक्षरं निगदशेषं ब्रूयात् अयं सर्वो निगदः देवताह्वानगर्भत्वात् आवाहननिगद इत्युच्यते ॥

२०५. **पूर्वोऽग्निसंमार्गः**—अध्वर्यु प्रेषितः आग्नीध्र इध्मसंनहनवेष्टितेन स्फ्येन मूलमारभ्य अग्रपर्यन्तम् मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण संमृज्य, मन्त्रेणाहवनीयं संमार्ष्टि । यागापेक्षया पूवत्वादयं पूर्वोऽग्निसंमार्ग इत्युच्यते ॥

२०६. **अञ्जलिकरणम्**—ततोऽध्वर्युः जुहूपभृतोरग्रे प्राञ्चमञ्जलिं निधाय अग्निं नमस्करोति मन्त्रेण । एतत्कर्म अञ्जलिकरणमित्युच्यते ॥

२०७. **अत्याक्रमणम्**—देवताह्वानकाले दक्षिणहस्तेन मन्त्रेण जुहूमादाय सव्येन तथैवोपभृतमादाय दक्षिणेन सव्येन वा पादेन अग्न्याज्ययोर्मध्यमार्गेण मन्त्रेण वेद्या दक्षिणतो गच्छति । तदेतत्सर्वं समन्त्रकं गमनं द्वितीयादिकममन्त्रकम् गमनं च अत्याक्रमणमित्युच्यते ॥

२०८. **अध्वर्युस्थानम्**—तत आहवनीये आहुतिप्रक्षेपार्थं तस्य दक्षिणतः मन्त्रेण स्वस्य स्थानं कल्पयति । एतदध्वर्युस्थानमित्युच्यते ॥

२०९. **जौहवः प्राक्संस्थो वा आघारः**—ततः यजमानेन स्रुचि अन्वारब्धः सन् मध्यमपरिधेर्मध्यम् जुह्वग्रेण संस्पृश्य मन्त्रेण अविच्छिन्नं प्राक्संस्थमाघारमाघारयति । अयमाघारो जौहव आघारः प्राक्संस्थ आघार इति चोच्यते ॥

---

१. निगदानां यजुष्ट्वं व्यवस्थापितं जैमिनिना । द्र० मीमांसा २।१। अधि० १३। सूत्र ३८-४५ ॥

२१०. **उद्ग्रहणम्**—आघारहोमार्थं वह्नेः संनिधौ अधःकृतां जुहूं मन्त्रेण ऊर्ध्वां करोति। एतत् उद्ग्रहणमित्युच्यते ॥

२११. **प्रत्याक्रमणम्**—ततः सव्यपादेनैव प्राङ्मुख एव मन्त्रेण पूर्वमार्गेणैव वे द्या उत्तरत आगच्छति। तदेतदागमनं द्वितीयादिक्रममन्त्रकम् चागमनम् प्रत्याक्रमणमित्युच्यते ॥

२१२. **ध्रुवासमञ्जनम्**—ततः सकृत् मन्त्रेण द्विस्तूष्णीं जुह्वा ध्रुवायामाज्यं स्रावयति। एतद् ध्रुवासमञ्जनमित्युच्यते ॥

२१३. **यथायतन-सादनम्**—'यथायतनं स्रुचौ सादयति' इत्यादौ पूर्वं यस्मात् स्थानात् स्रुचौ गृहीते तस्मिन्नेव स्थाने पुनः स्थापनम् यथायतनसादनमित्युच्यते ॥

२१४. **अध्वर्युकर्तृप्रवरणम्**—ततः उत्करदेशे संसृष्टम् ऊर्ध्वाग्रं स्फ्य धृत्वा स्वपृष्ठभागे आग्नीध्रमुपश्लिष्टं कृत्वा आश्राव्य आग्नीध्रेण प्रत्याश्राविते एकश्रुत्या मन्त्रं पठति। तस्य मन्त्रस्य भरतवत्पदानन्तरं यजमानप्रवरान् तद्धितप्रत्ययरहितान् होतुर्विपरीतान् वतिप्रत्ययान्तान् पठित्वा अवशिष्टं ब्रह्मण्वदित्यादिमन्त्रभागं पठति। तदेतत् अध्वर्युकर्तृकप्रवरणमित्युच्यते ॥

२१५. **उपोत्थानम्**—ततोऽमुकशर्मा मानुष इति होतुर्नाम गृह्णाति। तत् श्रुत्वा होता मन्त्रेण उत्थाय अन्यं मन्त्रं जपति। एतदुपोत्थानमित्युच्यते ॥

२१६. **अभिक्रमणम्**—ततो मन्त्रेण अध्वर्युसमीपं गच्छति। एतद् गमनम् अभिक्रमणमित्युच्यते ॥

२१७. **अध्वर्य्वाग्नीध्रान्वारम्भः**—तत एकेनैव मन्त्रेण दक्षिणहस्तेन दणिणेंऽसे अध्वर्युं दक्षिणेनोरुणा सव्यहस्तेन वा आग्नीध्रं च स्पृशति। अयमध्वर्य्वाग्नीध्रान्वारम्भ इत्युच्यते ॥

२१८. **मुखसंमार्गः**—ततः स्फ्यवेष्टनेध्मसंनहनाग्रैः सकृन्मन्त्रेण द्विस्तूष्णीं स्वमुखमभ्यात्मं स्पृशति। तन्मुखसंमार्ग इत्युच्यते।

२१९. **होतृषदनम्**—ततो होतृषदनं होता अभिमन्त्रयते तत्र होतृषदनं नाम वेद्युत्तरश्रोण्युत्तरदेशः होतुरुपवेशनस्थानम् ॥

२२०. **निरसनम्**—होतृषदने उपवेशनार्थमास्तीर्णानां दर्भाणां किञ्चि-

देकं तृणं अङ्गुष्ठानामिकाभ्यां गृहीत्वा मन्त्रेण नैर्ऋत्यां प्रक्षिपति । तत् प्रक्षेपणं निरसनमित्युच्यते ॥

२२१. **निरसनः [मन्त्रः]**—करणव्युत्पत्त्या मन्त्रोऽपि निरसन इत्युच्यते ॥

२२२. **उपवेशनः [मन्त्रः]**—ततो मन्त्रेण होता स्वस्थाने उपविशति दक्षिणोत्तरिणोपस्थेन । उपविश्यतेऽनेनेति करणव्युत्पत्त्या स मन्त्र उपवेशन इत्युच्यते ॥

२२३. **बर्हिरुपस्पर्शनम्**—ततो वेद्यास्तृतवर्हिः दक्षिणजानुशिरसा मन्त्रेण स्पृशति । तदेतद् बर्हिरुपस्पर्शनमित्युच्यते ॥

२२४. **स्रुगादापनः [निगदः[**—होता इध्मप्रदीपनसमये एकं यजुर्मन्त्रं पञ्च ऋचश्च जपित्वा इध्मे प्रदीप्ते सति यस्य निगदस्य षडक्षरो मध्यभागः उपांशु पठ्यते तं निगदमुच्चैः एकश्रुत्या पठति । तन्निगदघटक **घृतीवती**-शब्दस्य श्रवणानन्तरम् अध्वर्युः प्रयाजहोमाद्यर्थं जुहूपभृतौ गृहीत्वातिक्रामति । स्रुचौ जुहूपभृतौ आदाप्येते अनेनेति करणव्युत्पत्त्या स निगदः **स्रुगादापन** इत्युच्यते ॥

२२५. **आश्रावणम्, आश्रुतं च**—अध्वर्युर्जुहूपभृतावादाय अत्याक्रम्य स्वस्थाने तिष्ठन् आश्रावयति । तत्र आश्रावणं इति च प्लुताकारपूर्वक-प्लुतादिश्रावयेति पदोच्चारणम् आश्वलायनसूत्रे तु प्लुतो य ओकारस्तत्पूर्व-कश्रावयेतिपदोच्चारणम् ॥

२२६. **प्रत्याश्रावणम्, प्रत्याश्रुतं च**—आग्नीध्र इध्मसन्नहनवेष्टितं स्फ्य-मूर्ध्वाग्रं धृत्वा उत्करे दक्षिणामुखः तिष्ठन् सर्वदा आश्रावणानन्तरम् अस्तु-शब्दपूर्वकप्लुतादिश्रौषट्पदमुच्चारयति । तदेतत् प्रत्याश्रवणं प्रत्याश्रुतमिति चोच्यते ॥

२२७. **प्रैषः**—यजेत्यादिलोण्मध्यमपुरुषान्तपदघटितेन येन वाक्येन अध्व-र्य्वादिना होत्रादिः प्रेर्यते तद्वाक्यं प्रैष इत्युच्यते ॥

२२८. **पुरोनुवाक्या, अनुवाक्या च**—अध्वर्युप्रेषितो होता एकश्रुत्या पुरोनुवाक्यां पठति । सा च प्रायः एकैव ऋक् भवति । तस्याः प्रथमार्धर्चे एकमवसानं चतुर्मात्रप्रणवान्तद्वितीयार्धर्चे द्वितीयमवसानम् । यस्मिन् यागे मैत्रावरुणो भवति तत्र स एव पुरोनुवाक्यां पठति । पुरः पूर्वं यागाद् देवताम् अनुकलयितुं या ऋगुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदं अनुवाक्यापदं च ऋग्विशेषबोधकम् ॥

२२९. **आगूः**—यच्छब्दस्य प्रथमाबहुवचने 'ये' इति भवति तत्र एकारः प्लुतः पाठ्यः, तत्पूर्वकम् 'यजामहे' इति तिङन्तं रेफान्तेन आगूः शब्देनोच्यते ॥

२३०. **आगूः**—पित्र्यायामिष्टौ तु 'यजामहे' इत्यस्य स्थाने 'स्वधामहे' इति पठ्यते सैव तत्र आगूरित्युच्यते ॥

२३१. **वषट्कारः**—वकारोत्तरवर्त्यकारस्य स्थाने प्लुतमौकारं[वौषट्] कृत्वा वषट् इति शब्दः पठ्यते । स वषट्कार इत्युच्यते ॥

२३२. **वषट्कारः**—पित्र्यायां तु वषट्कारस्थाने स्वधापदपूर्वकं 'नमः' इति पदं पठ्यते स एव तत्र वषट्कारो भवति ॥

२३३. **याज्या**—आगूःपूर्विका वषट्कारान्ता प्रायशोऽर्धर्चावसाना बहुस्थानेषु एकैव ऋक् क्वचिदनृगपि याज्यापदेनोच्यते ।

२३४. **याज्यापठनप्रकारः**—याज्याया अचां मध्ये अन्त्योऽच् प्लुतो भवति । रुस्थानिको विसर्गः याज्याया अन्ते भवति चेत् वषट्कारेण संधौ अवसानाभावात् रेफ एव विसर्गस्थाने ऽवतिष्ठते । रेफस्थानिको विसर्गो यत्र तत्र लोप एव विसर्गस्य भवति । याज्यान्तानामन्येषां तु व्यञ्जनानां यथाव्याकरणं वषट्कारेण सह संधिर्भवति । एकारस्य ऐकारस्य वा याज्यान्तत्वे तयोः संध्यक्षरत्वात् प्लुतमकारं पृथगुच्चार्य इकारं ह्रस्वमेव अन्ते पठित्वा वषट्कारं पठेत् । एवं ओकारस्य औकारस्य वा तथात्वे तयोरपि प्लुतम् अकारं पृथगुच्चार्य उकारमन्ते पठित्वा वषट्कुर्यात् । तत्र केवलः रकार रेफ इत्युच्यते ॥

२३५. **व्यञ्जनानि**—कादयो मान्ताः यादयो हान्ताश्च वर्णा व्यञ्जनपदवाच्याः ।

२३६. **अचः, स्वराश्च**—एकारादयश्चत्वारः अइउऋऌ इति च पञ्च वर्णाः अच इति स्वरा इति चोच्यन्ते ॥

२३७. **सन्ध्यक्षराणि**—'सन्धिसंपन्नानि अक्षराणि' इति समासे एकारादयश्चत्वारो वर्णाः संध्यक्षराणीत्युच्यन्ते ॥

२३८. **मन्द्रस्वरः**—सामिधेनीप्रभृतिप्रयाजान्तं शंयुवाकानन्तरं च मन्द्रस्वरेण पठ्यते । 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् । प्रातःएवनयोगं तं छन्दो गायत्रमाश्रितम्' इति शिक्षोक्तत्या[1] 'मन्द्रस्तु गम्भीरे' (१।७।२)

१. पाणिनीय (श्लोकात्मिका) शिक्षा, ७।

इत्यमरोक्त्या च कायाग्निप्रेरितो वायुः उरोदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र गम्भीरे स्वरे वर्णानुत्पादयति, गानशास्त्रे यं प्रथमग्राम इति वदन्ति, स मन्द्रस्वर इत्युच्यते ॥

२३९. **यमाः**—तस्य सप्त यमा भवन्ति। तत्र षष्ठेन यमेन याज्या पठ्यते, सप्तमेन वषट्कारः 'उच्चैस्तरां बलीयान् याज्यायाः'[1] इत्याश्वलायनसूत्रात् 'उच्चैस्तरां वा वषट्कारः'[2] इति पाणिनिसूत्राच्च तत्र उच्चनीचभावेन आरोहणावरोहणक्रमेण संपाद्यमानाः गानशास्त्रे षड्जादिनामभिः प्रसिद्धा यमा इत्युच्यन्ते ॥

२४०. **दर्शः**—'दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथक्'[3] इति कोशात् अमावास्यायामन्वाधानं कृत्वा प्रतिपदि यागः क्रियते स यागो दर्श इत्युच्यते ॥

२४१. **पूर्णमासः**—पौर्णमास्यामन्वाधाय प्रतिपदि क्रियमाणो यागः 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः' इति सूत्रात् पूर्णमासे भव इति व्युत्पत्त्या पौर्णमासशब्दप्रतिपाद्य दर्शशब्दवत् लक्षणया पूर्णमासशब्दप्रतिपाद्यश्च भवति ॥

२४२. **प्रकृतिः**—दर्शपूर्णमासयोरेव श्रुत्यादिषु सर्वविधेरुपदेशात् अन्यत्र च अत्रत्यस्य सर्वेतिकर्तव्यताकलापस्य अतिदेशात् दर्शपूर्णमासौ प्रकृतिपदवाच्यौ ॥

२४३. **विकृतिः**—यत्रयत्र अतिदेशः प्रवर्त्तते स यागो विकृतिपदेन व्यवह्रियते ॥

२४४. **प्रयाजाः**—प्रधानयागात् पूर्वम् इज्यते यैरिति व्युत्पत्त्या एते सर्वे प्रयाजा इत्युच्यन्ते ॥

**प्रयाजसंख्याः**—तत्र प्रकृतौ पञ्च प्रयाजा भवन्ति। ते च आगुरादयो यजूरूपाः वषट्कारान्ताः याज्यात्वात् भवन्ति। तेषामन्ते वषट्कारात् पूर्वं सूत्रे 'वेतु वीता व्यन्तु' इति पदत्रयमध्ये अन्यतमं पदं पठितमस्ति याज्यान्तत्वप्रयुक्ता प्लुतिश्च तस्यैव भवति ॥ चतुर्णां प्रायाजानां वसन्तग्रीष्मवर्षाशरदो देवताः। पञ्चमस्य तु हेमन्तशिशिरौ समस्तौ देवता। तत्र

१. आश्वलायन श्रौत सूत्र १।५।१६ ॥

२. अष्टा० १।२।३५ ॥ ३. अनुपलब्धमूलम्।

द्वितीयः प्रयाजः यजमानस्य गोत्रेण वासिष्ठत्वे शौनकत्वे आत्रेयत्वे वाध्रयश्वत्वे क्षत्रियत्वे वा आदौ नराशंसपदघटितः, अन्येषां तु तनूनपात्पदादिः ॥

चातुर्मास्यगतमुख्येष्टिषु नव प्रयाजा भवन्ति । तत्र आद्याश्चत्वारः प्राकृता एव । तदुत्तरं चत्वारो ऽपूर्वाः विहिताः । तेषां मध्ये प्रथमस्य देव्यो द्वारो देवता, द्वितीयस्य उषासानक्ता, तृतीयस्य दैव्यौ होतारौ, चतुर्थस्य तिस्रो देव्यः, नवमो ऽपि प्राकृत एव । पाशुके तु एकादश प्रयाजा भवन्ति । ते च सर्वे ऽपि ऋग्रूपाः ॥

२४५. **नाराशंसवन्तः प्रयाजाः**—तत्र शाकलसंहितायां वसिष्ठेन दृष्टानि यानि सूक्तानि तदन्तर्गता एकादश ऋचः वासिष्ठगोत्रस्य यजमानस्य भवन्ति । एवमात्रेयगोत्रस्य तद्दृष्टसूक्तान्तर्गताः वध्र्यश्वदृष्टसूक्तान्तर्गतास्तद्गोत्राणां, गृत्समदस्य शौनकत्वात् गृत्समददृष्टसूक्तान्तर्गताः शौनकगोत्रस्य भवन्ति । अत्र सर्वत्र द्वितीया ऋचो नराशंसपदघटिताः । एते चतुर्विधाः प्रयाजा नाराशंसवन्त इत्युच्यन्ते ॥

२४६. **उभयवन्त, प्रयाजाः प्रैषाश्च**—मेधातिथिदृष्टसूक्तान्तर्गताः द्वादश ऋचः । तत्र द्वितीयतृतीये ऋचौ क्रमेण तनूनपान्नराशंसपदघटिते । अत एव ताः सर्वविधयजमानार्थाः । एवं दीर्घतमसा दृष्टा अपि द्वादश व्यवस्थया पूर्वोक्तया एकादश सर्वार्था भवन्ति । तत्र एकादश प्रयाजास्तत्र तेषां प्रैषां-मैत्रावरुणेन पठ्यमाना द्वादश प्रैषसूक्ते पठिता अपि पूर्वोक्तव्यवस्थया एकादशैव भवन्ति । अत्र सूक्तद्वयगताः प्रयाजाः प्रैषश्च उभयवन्त इत्युच्यन्ते ॥

२४७. **तनूनपात्वन्तः प्रयाजाः**—ऋष्यन्तरदृष्टाः प्रयाजास्तनूनपात्पदघटितद्वितीयप्रैषवत्त्वात् तनूनपात्वन्त इत्युच्यन्ते ॥

२४८. **वषट्कारानुमन्त्रणम्**—होता अन्यो ऽपि वा वषट्कारानन्तरं नियमेन यं मन्त्रं जपति, स वषट्कारानुमन्त्रणमित्युच्यते ॥

२४९. **त्यागः**—वषट्कारसमकालं अध्वर्युर्जुहोति । तदानीमेव चतुर्थ्यन्तं देवतानाम उद्दिश्य 'न मम' इति यजमानः पठति । स त्याग इत्युच्यन्ते ॥

२५०. **वीतवत्पादाग्ताः प्रयाजाः**—अनृग्रूपाः प्रयाजाः वीधातूत्तरलोडन्तपदान्तकत्वात् वीतवत्पदान्ता इत्युच्यन्ते ॥

२५१. **प्रयाजशेषाभिघारणम्**—अध्वर्युः प्रयाजैरिष्ट्वा उदङ्ङत्याक्रम्य जुहूस्थाज्यशेषेण ध्रुवामभिघार्य क्रमेण हवींष्यभिघार्य उपभृतमभिघारयति । तदेतत् प्रयाजशेषाभिघारणमुच्यते ।

२५२. **चतुरवत्तम्**—अध्वर्युः ध्रुवाज्यात् स्रुवेण जुह्वाम् एकवारमाज्यं गृहीत्वा अनुवाक्यापठनार्थं होतारं 'अनुब्रूहि' इत्यन्तेन मन्त्रेण संप्रैष्य पुनस्त्रिवारं गृह्णाति। तदेतत् चतुरवत्तमित्युच्यते ॥

२५३. **चतरवत्ती**—यस्यैवं भवति स यजमानश्चतुरवत्ती भवति ॥

२५४. **पञ्चावत्तम्**—'जामदग्न्या वत्सविदावार्ष्टिषेणास्तथैव च। भार्गवाश्च्यावना और्वाः पञ्चावत्तिन ईरिताः' इति वचनात् एतद्वचनोक्तगोत्राणां यजमानानां पञ्चवारमवद्यति। एतत्पञ्चावत्तमित्युच्यते ॥

२५५. **पञ्चावत्ती**—यजमानश्च पञ्चावत्ती भवति ॥

२५६. **अवदानम्**—दो अवखण्डने इति पठितत्वात् स्थापितहविषः होमपरिमितस्य भागस्य ग्रहणार्थं खण्डनम् अवदानमित्युच्यते ॥

२५७. **आज्यभागौ**—अनया रीत्या अवदाय गृहीत्वा अत्याक्रम्य, दक्षिणाभिमुख्या स्रुचा आहवनीयस्यैशानभागे आग्नेयमाज्भागं हुत्वा, उदङ्ङत्याक्रम्य पूर्ववदवदाय गृहीत्वा अत्याक्रम्य उदङ्मुख्या स्रुचा अग्नेयदेशे सौम्यमाज्यभागं जुहोति। तत्र आज्यं भागो ययोरिति व्युत्पत्त्या तद्देवते अग्नीषोमौ अज्यभागपदार्थौ ॥

२५८. **चरुपुरोडाशाद्यवदानम्**—आज्यभागानन्तरं जुह्वामुपस्तीर्य मन्त्रेग दक्षिणहस्तनमस्कारेण पुरोडाशादिरूपं हविरुपस्थाय उपविश्य मन्त्रेण हविरभिमृश्य पञ्चभिरङ्गुलिभिः अङ्गुष्ठमध्यमानामिकाभिर्वा प्रथमपुरोडाशादेः पूर्वार्धात् अवदाय चर्वादिद्रव्यस्य तु मेक्षणेनैवावदाय द्वितीयं पश्चार्धादवदाय, पञ्चावत्तिनस्तु मध्यात् पूर्वार्धात् पश्चार्धादिति त्रिरवदाय अभिघारयति। एवं रीत्या क्रियमाणं चरुपुरोडाशाद्यवदानमुच्यते ॥

२५९. **प्रत्यञ्जनम्**—अवत्तं हविरभिघार्य आज्यस्थाल्याज्येन मन्त्रेण अवदानस्थानान्याप्याययति। तदेतत् प्रत्यञ्जनमित्युच्यते ॥

२६०. **प्रधानयागः**—एवं रीत्या अवदाय अत्याक्रम्य वषट्कृते प्राक्संस्था उदक्संस्था वा प्रधानाहुतीर्जुहोति सोऽयं प्रधानयाग इत्युच्यते ॥

२६१. **पुरस्तादाहुतिः**—प्रधानयागे अवदानानन्तरं अत्याक्रमणात् पूर्वं ध्रौवाज्येन स्रुवेण तूष्णीं करिष्यमाणतत्तत्प्रधानहोमदेशे स्विष्टकृद्धोमदेशे च एकामाहुतिं जुहोति। सा पुरस्तादाहुतिरित्युच्यते ॥

२६२. **उपरिष्टादाहुतिः**—एवं प्रत्याक्रमणानन्तरं प्रक्षिप्तस्य हविष उपरि अन्यामाहुतिं जुहोति सा। उपरिष्टादाहुतिरित्युच्यते ॥

२६३. **पार्वणहोमः**—प्रधानहोमानन्तरं उपस्तीर्य सर्वेषां हविषां उत्तरार्धात् सकृत्सकृदवदानं, पञ्चावत्तिनस्तु द्विरवादनं भवति। एवं ततो द्विरभिघारयति। अवत्ते स्विष्टकृति स्रुवेण दर्शे अमावास्यादेवताकां पौर्णमासे पौर्णमासीदेवताकामाहुतिं जुहोति। स पार्वणहोम इत्युच्यते ॥

२६४. **स्विष्टकृद्धोमः**—अत्र पुरोडाशादेरुपस्थानाभिमर्शने न भवतः। अवदानदेशानां प्रत्यञ्जनं च न भवति। एवमवदाय अत्याक्रम्य वषट्कृते अग्नौ ऐशानदेशे जुहोति। सोऽयं स्विष्टकृद्धोम इत्युच्यते।

२६५. **देवतादेशः**—होता आज्यभागप्रभृति स्विष्टकृत्पर्यन्तं याज्यापाठे आगुरम् उच्चार्य संहितया द्वितीयान्तं देवतानाम उच्चार्य याज्यां संहितया पठति। तदेतत् देवतानामोच्चारणं देवतादेश इत्युच्यते ॥

२६६. **स्विष्टकृन्निगदः**—'स्विष्टकृतं यज' इति श्रुत्वा आगुरमुच्चार्य देवतामादिश्य निगदं पठित्वा याज्यासंज्ञामृचं पठति। स स्विष्टकृन्निगद इत्युच्यते ॥

२६७. **अन्तःपरिधिनिनयनम्**—अध्वर्युः स्विष्टकृद्धोमानन्तरं प्रत्याक्रम्य उपरिष्टादाहुतिं हुत्वा जुह्वां जलं गृहीत्वा संक्षाल्य तज्जलं मध्यमपरिधेरन्तर्देशे मन्त्रेण उदकसंस्थं प्रक्षिपति। तत् अन्तःपरिधिनिनयनमित्युच्यते ॥

२६८. **बहिःपरिधिनिनयनम्**—पुनर्जुहूं जलेन प्रक्षाल्य वह्नौ निष्टप्य पूरयित्वा मन्त्रेण परिधेर्बहिः जलं पूर्ववत् प्रक्षिपति। तत् बहिःपरिधिनिनयनमित्युच्यते ॥

२६९. **प्राशित्रः**—तत उपभृति विद्यमानमाज्यं जुह्वां कृत्वा यथायतनं जुहूपभृतौ सादयित्वा मन्त्रेण प्राशित्रहरणे प्रथमप्रधानद्रव्यसम्बन्धिनं प्राशित्रमवद्यति। स्रुवदण्डेनाभिघार्य प्रणीतानां पश्चिमतः सादयति। स भागः प्राशितुः ब्रह्मणः अयमिति विग्रहेण प्राशित्रपदवाच्यः ॥

२७०. **यजमानभागः**—तत इडापात्रं वेद्यां उदगग्रं निधाय तस्मिन् यावन्ति प्रधानद्रव्याणि तावदर्थं सकृदेव उदक्संस्थं आज्यस्थाल्याज्येनोपस्तीर्य प्रथमप्रधानद्रव्यदक्षिणार्धाद् अवदानदेशसंस्पर्शमकुर्वन् मन्त्रेण अवदाय इडापात्रे उपस्तीर्णदेशे निधाय उत्तरार्धात्तु तूष्णीं अवदानदेशसंस्पर्शं कुर्वन्नेवावदाय तथैव निदधाति। ततस्तस्यैव द्रव्यस्य पूर्वभागात् त्र्यङ्गुलं चतुरङ्गुलं खण्डं तूष्णीमवदाय आज्यस्थाल्याज्येन सुसंतृप्तं संतर्प्य ध्रुवायाः पूर्वभागे निदधाति। तत् खण्डं यजमानकर्तृकप्राशनार्थत्वात् यजमानभाग इत्युच्यते ॥

२७१. **इडावदानम्**—ततः द्वितीयादिप्रधानद्रव्याणां प्रथमवदवदाय निधाय उपस्तरणवद् अभिघारयति। एतदिडावदानमुच्यते ॥

२७२. **अङ्गुलिपर्वाञ्जनम्**—होतुः प्रदेशिन्याः उत्तमे पर्वणी आज्येन स्रुवेण अनक्ति। तदङ्गुलिपर्वाञ्जनमुच्यते ॥

२७३. **ओष्ठनिमार्गः**—ततः होता उत्तरेण पर्वणा उत्तरं स्वीयमोष्ठं मन्त्रेण निमृज्य अधरं ओष्ठं अधरेण पर्वणा मन्त्रेण निमार्ष्टि। अयमोष्ठ-निमार्ग इत्युच्यते ॥

२७४. **अवान्तरेडा**—ततोऽपः स्पृष्ट्वा अध्वर्युणा दीयमानामिडापात्रीं अञ्जलिना प्रतिगृह्य सव्ये पाणौ कृत्वा तस्याः पश्चात् उदगङ्गुलिं पाणिमुपधाय तस्मिन् अध्वर्युः उपस्तरणपूर्वकम् इडायाः कञ्चिदंशं ददाति। तं गृहीत्वा अङ्गुल्यङ्गुष्ठयोर्मध्येन स्वयं द्वितीयमंशं गृह्णाति। अध्वर्युस्तदुपरि अभिघारयति। होता तत् भागद्वयमङ्गुष्ठेनाभिसंगृह्य अङ्गुलीः प्रत्याहृत्य मुष्टिमकृत्वा दक्षिणभागे इडापात्रं प्रागग्रमुदगग्रं वा प्रतिगृह्य मुखसंमितं नासिकासंमितं वा धारयति। तत्र पाणिगृहीतं भागद्वयम् अवान्त-रेडा इत्युच्यते ॥

२७५ **चतुर्धाकरणम्**—तथा धारयित्वा कंचिन्मन्त्रं जपित्वा उच्चैरन्यं मन्त्रं पठति। तत्र मन्त्रे 'यदध्वर्यव' इति पदं तत् श्रुत्वा अध्वर्युः प्रथमं पुरोडाशं चतुर्धा कृत्वा बर्हिषि निदधाति। तदेतत् चतुर्धाकरणमित्युच्यते ॥

२७६. **इडोपह्वानम्**—अनया रीत्या इडापात्रं धारयित्वा मन्त्रपठनम् इडोपह्वानमित्युच्यते ॥

२७७. **षडवत्तम्**--उपहूतायामिडायाम् अध्वर्युराग्नीध्रस्य हस्ते उपस्तीर्य प्रथमम् इडायाः कंचिदंशं दत्त्वा अभिघार्य पुनरुपस्तीर्य द्वितीयं दत्त्वा अभि-घारयति। तदेतत् षडवत्तमित्युच्यते ॥

२७८. **इडाप्राशनम्**—ततो ब्रह्मणे होत्रे च इडाभागं दत्त्वा स्वं भागं गृहीत्वा यजमानाय ददाति। होता पाणिगृहीतामवान्तरेडां मन्त्रेण भक्षयति। 'जुष्टिरसि' इत्यादिमन्त्रेण यजमानोऽनुमन्त्रयते। ततः सर्वे ऋत्विजः सय-जमाना इडां भक्षयन्ति। तदेतदिडाप्राशनमित्युच्यते ॥

२७९. **इडा**—इडापात्र्यां पूर्वविधिना गृहीतं हविरिडेत्युच्यते ॥

२८०. **इडामार्जनम्**—ततः अध्वर्य्वाग्नीध्रौ बर्हिषि उत्तानं दक्षिणं हस्तं निधाय तस्मिन् जलं सिञ्चतः। होतृब्रह्माणौ तु परिस्तरणस्याधस्तादञ्जलिं

निक्षिप्य, अन्येन जलं सेचयतः। यजमानस्तु मन्त्रं पठन् प्रस्तरस्याधस्तादञ्जलिं निधाय अध्वर्युणा जलं सेचयति। तदेतत् सर्वम् इडामार्जनमित्युच्यते ॥

२८१. **प्राशित्रपरिहरणम्**—अध्वर्युणा प्रेषितः आग्नीध्रः प्रणीतापश्चिमतः स्थापितं प्राशित्रहरणं गृहीत्वा आहवनीयपूर्वमार्गेण गत्वा ब्रह्मणे ददाति। ब्रह्मा मन्त्रेण तत् प्राशित्रं दृष्ट्वा मन्त्रेण अञ्जलिना प्रतिगृह्य वेद्यां कुशेषु प्राग्दण्डं मन्त्रेण निदधाति। तदेतत्कर्म प्राशित्रपरिहरणमित्युच्यते ॥

२८२. **प्राशित्रप्राशनम्**—ब्रह्मा पात्रात् प्राशित्रभागमादाय स्थानान्तरं गत्वा मन्त्रेण प्राश्नाति। एतत्प्राशित्रप्राशनमित्युच्यते ॥

२८३. **अन्वाचमनम्**—ततः स्मृत्युक्तमाचमनं कृत्वा मन्त्रेण पुनराचामति। तदन्वाचमनमित्युच्यते ॥

२८४. **नाभ्यालम्भनम्**—ततः मन्त्रेण सोदकेन पाणिना नाभिं स्पृशति। तत् नाभ्यालम्भनमित्युच्यते ॥

२८५. **अभ्यात्माब्निनयनम्**—ततः स्वस्थाने उपविश्य प्राशित्रहरणं प्रक्षाल्य तस्मिन् जलं प्रक्षिप्य तेन आत्माभिमुखं त्रिवारं भूमौ सिञ्चति। एतत् अभ्यात्माब्निनयनमुच्यते।

२८६. **चतुर्धाकृतभागदानम्**—अध्वर्युकर्तृकप्राशित्रपरिहरणप्रैषोच्चारणानन्तरं यजमानो बर्हिषि निहितान् प्रथमपुरोडाशस्य चतुरो भागान् अनुमन्त्र्य एकैकं भागं दर्भेण स्पृष्ट्वा 'इदं ब्रह्मणः' 'इदं होतुः' 'इदमध्वर्योः' 'इदमाग्नीध्रस्य' इति उद्दिशति। तदेतत् चतुर्धाकृतभागदानमित्युच्यते ॥

२८७. **चतुर्धाकृतभागपरिहरणम्**—ततोऽध्वर्युराग्नीध्रभागं द्वेधा कृत्वा आग्नीध्रहस्ते उपस्तीर्य भागस्यैकदेशं दत्त्वा पुनरुपस्तीर्य द्वितीयमेकदेशं दत्त्वा द्विरभिघारयति। अत्र एतादृशं षडवत्तं भवति। इडाभागे अन्यादृशं षडवत्तमुक्तम् ततो वेदेन ब्रह्मणे ब्रह्मभागं ददाति,स्रुवेण होत्रे होतृभागं दत्त्वा स्वयं स्वभागं जुह्वा गृह्णाति। एतत् चतुर्धाकृतभागपरिहरणमित्युच्यते ॥

२८८. **भागनिधानम्**—ब्रह्मा स्वभागं गृहीत्वा अब्निनयनानन्तरं वेद्यां कुशेषु स्थापिते प्रत्यग्दण्डे प्राशित्रहरणे निधाय अध्वर्युणा पूर्वं ध्रुवायाः पूर्वदेशे स्थापितं यजमानभागं,तस्य पश्चात् कुशेषु निदधाति। इदं भागनिधानमित्युच्यते ॥

२८९. **भागप्रतिग्रहः**—ततः सर्वे ऋत्विजः स्वं-स्वं भागं स्व-स्वमन्त्रैः कामस्तुतिनामकैः प्रतिगृह्णन्ति। स भागप्रतिग्रह इत्युच्यते ॥

२९०. **अन्वाहार्यविक्षणम्**—ततो ब्रह्मा आहवनीयस्य पूर्वमार्गेण वेद्या उत्तरतः गार्हपत्यस्य पश्चिमतश्च गत्वा दक्षिणाग्नौ सुशृतं अध्वर्यूणा अभिघार्य दक्षिणस्यां श्रोण्यां स्थापितं अन्वाहार्यं मन्त्रेण पश्यति। तदन्वाहार्यावेक्षणमित्युच्यते ॥

२९१. **अन्वाहार्यविघ्राणम्**—ततो मन्त्रेण स्पर्शमकुर्वन् तदीयगन्धं जिघ्रति। तदन्वाहार्यविघ्राणमुच्यते ॥

२९२. **यजमानकर्तृकमन्वाहार्यावेक्षणम्**—ततो ब्रह्मणि अङ्गुष्ठानामिकाभ्यामन्वाहार्यैकदेशं गृहीत्वा यथागतमागत्य स्वस्थाने उपविश्य ब्रह्मभागे प्राशित्रहरणस्थे तमेकदेशं स्थापयति सति, अध्वर्युरन्वाहार्यस्थालीं वेद्यां यजमानसंमुखां स्थापयति। यजमानस्तन्मध्यगतमन्वाहार्यं पश्यति। तद्यजमानकर्तृकमन्वाहार्यावेक्षणमुच्यते ॥

२९३. **अन्वाहार्यदानम्**—ततः सर्वान् ऋत्विजः संबोध्य 'अयं वः ओदनः, यूयं यथाभागं प्रतिगृह्णीध्वम्' इति वदति। तदन्वाहार्यदानमित्युच्यते ॥

२९४. **अन्वाहार्यप्रतिग्रहः**—अध्वर्य्वाग्नीध्रौ सप्तदशकृत्वोऽपान्य[1] मन्त्रेण प्रतिगृह्णीतः, होतृब्रह्माणौ आश्वलायनसूत्रपठितेन कामस्तुतिसंज्ञकेन मन्त्रेण प्रतिगृह्णीतः। सोऽयमन्वाहार्यप्रतिग्रह इत्युच्यते ॥

२९५. **अपाननम्**—अपाननं नाम बाह्यवायोः नासापुटाभ्यामन्तराकर्षणम् ॥

२९६. **हविरुद्वासनम्**—ततो वेद्यां विद्यमानानां हविःशेषाणां वेद्या बहिः उत्तरतः प्रक्षेपणं हविरुद्वासनमित्युच्यते ॥

२९७. **अनुयाजसमिदाधानम्**—ततः [अध्वर्युः] एकविंशतिदारुकेध्मसंबन्धिनीं पारिशेषितां समिधम् आहवनीये प्रक्षेप्तुं ब्रह्मणोऽनुज्ञां याचमानः आग्नीध्रम् आहवनीयसंमार्गं प्रेष्यति। ब्रह्मा च कंचिन्मन्त्रं जपित्वा उच्चैरनुज्ञां ददाति। अध्वर्युस्तां समिधमनुयाजहोमार्थमाहवनीये ऽभ्यादधाति। तदनुयाजसमिदाधानमित्युच्यते ॥

२९८. **उत्तराहवनीयसंमार्गः**—आग्नीध्रः स्फ्ये पूर्वं वेष्टितमिमध्मसन्नहनं विमुक्तं कृत्वा तेन पूर्ववत् सकृत् परिधीन् संमृज्य मन्त्रेण आहवनीयं संमार्ष्टि। सोऽयमुत्तराहवनीयसंमार्ग इत्युच्यते ॥

---

१. द्र० पदार्थः २९५।

२९९. **अनुयाजप्रचारः, अनुयाजहोमश्च**—अध्वर्युर्जुहूपभृतावादायात्यान्क्रम्याश्राव्य आग्नीध्रेण इध्मसंनहनरहितस्फ्यहस्तेन प्रत्याश्राविते होतारं याज्यापठनार्थं प्रेष्यति। होत्रा वषट्कृते प्रक्षिप्तसमित्पूर्वार्धे जुहोति। पुनस्तथैवाश्रावणादि कृत्वा वषट्कारे समिन्मध्ये जुहोति। पुनस्तथैव कृत्वा वषट्कृते समिधो मूलमारभ्याग्रपर्यन्तं संततधारया जुहोति। सो ऽयमनुयाजप्रचारो ऽनुयाजहोमश्चोच्यते ॥

३००. **अनुयाजाः [मन्त्राः]**—अत्र अनु पश्चात् प्रधानयागानन्तरं इज्यते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्यामन्त्रा अनुयाजा इत्युच्यन्ते ॥

३०१. ते च वीधातुप्रकृतिकलोट्प्रथमपुरुषान्ताः वीतवत्पदान्ता इति प्रयाजवदुच्यन्ते ॥

३०२. **स्रुग्व्यूहनम्**—अनुयाजप्रचारानन्तरं उदगागत्य यथास्थानं स्रुचौ सादयित्वा यजमानेन सह मन्त्रेण जुहूमूर्ध्वाम् उत्तानेन दक्षिणहस्तेन गृह्णाति। एवं नीचेन सव्यहस्तेन अधस्तात् उपभृतम् अध्वर्युयजमानौ कुरुतः। तत उभौ प्रागग्रां जुहूं मन्त्रेण दक्षिणांसपर्यन्तं प्रापयतः। तथैवोपभृतं प्रत्यगग्रां उत्तरश्रोणिपर्यन्तं प्रापयतः। तदेतत्कर्म स्रुग्व्यूहनमित्युच्यते ॥

३०३. **परिध्यञ्जनम्**—ततो ऽध्वर्युर्जुह्वा मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण पृथक्-पृथक्मन्त्रैरनक्ति। एतत्कर्म परिध्यञ्जनमित्युच्यते ॥

३०४. **प्रस्तराञ्जनम्**—ततः उपभृतं जलेन संस्पृश्य यथास्थानं स्रुचौ सादयित्वा जुह्वा आधारभूतं सविधृतिपवित्रं प्रस्तरं गृहीत्वा मन्त्रेण प्रस्तराग्राणि जुह्वामनक्ति, तथैवोपभृतिमध्यानि अनक्ति, तथैव ध्रुवायां मूलानि अनक्ति। तदेतत्प्रस्तराञ्जनमित्युच्यते ॥

३०५. **सूक्तवाकप्रैषः**—प्रस्तरसंबन्ध्येकं तृणमादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां हस्ताभ्यां प्रस्तरं धृत्वा जुह्वामूर्ध्वाग्रमवष्टभ्य आश्राव्य प्रत्याश्राविते प्रैषं पठति। स सूक्तवाकप्रैष इत्युच्यते ॥

३०६. **सूक्तवाकः**—अध्वर्युप्रेषितो होता यं मन्त्रं पठति स सूक्तवाक इत्युच्यते ॥

३०७. **उज्जितवाचनम्**—सूक्तवाकान्तर्गतमन्त्रविशेषपठनकाले अध्वर्युर्यद् यजमानं मन्त्रं पाठयति तत् उज्जितिवाचनमित्युच्यते ॥

३०८. **प्रस्तरप्रहरणम्**—सूक्तवाकस्य अन्तिमं **देवेभ्य** इति श्रुत्वा तिर्यञ्चं हस्तं कृत्वा कर्षन्निव प्रस्तरमाहवनीयेऽनुप्रहरति मन्त्रेणाध्वर्युः। तत् प्रस्तरप्रहरणमिति गीयते ॥

३०९. **तृणप्रहरणम्**—ततः पूर्वं प्रज्ञातं यथास्यात्तथा निहितं तृणं गृहीत्वा आग्नीध्रं संबोधयति '**अग्नीत्**' इति। आग्नीध्रस्तु अध्वर्युं प्रति '**संवदस्व**' इति वदति। पुनरध्वर्युस्तमाह—'**अगानग्नीत्**' इति पुनराग्नीध्रस्तमाह—'**अगन्**' इति। पुनरध्वर्युस्तमाह—'**आ३श्रावय**' इति पुनराग्नीध्रस्तमाह—'**श्रौ३षट्**' इति। पुनरध्वर्युर्गृहीतं तृणं प्रदर्शयन्नाग्नीध्रं प्रत्याह—'**इदं ब्रू३हि**' इति। तत आग्नीध्रस्तं प्रत्याह—'**अनुप्रहर**' इति। ततोऽध्वर्युस्तत् तृणमाहवनीयेऽनुप्रहरति। तदेतत् तृणप्रहरणमित्युच्यते॥

३१०. **शंयुवाकप्रैषः**—ततोऽध्वर्युर्होतारं [शंयुवाकार्यं] प्रेष्यति। स शंयुवाकप्रैष इत्युच्यते॥

३११—**शंयुवाकः**—अध्वर्युप्रेषितो होता यामृचम् अर्धर्चे अवसाय एकश्रुत्या अन्ते प्रणवरहितां पठति, सा ऋक् शंयुपदघटितत्वात् शंयुवाक इति गीयते॥

३१२. **मध्यमस्वरः**—आज्यभागप्रभृति सर्वं प्रधानयाज्यादिकं मध्यमस्वरेण पठनीयम्। तत्र 'कण्ठे माध्यन्दिनयुगं मध्यमम्'[1] इति शिक्षोक्तेर्जठराग्निना प्रेरितो वायुः कण्ठदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र वर्णानामभिव्यक्तिं करोति। स मध्यमस्वर इति उच्यते।

३१३. **उत्तमस्वरः**—स्विष्टकृत्प्रभृति शंयुवाकान्तमुत्तमस्वरेण पठ्यते। तत्र 'तारं तृतीयसवनं शीर्षण्यम्'[2] इति शिक्षावचनात् जठराग्निप्रेरितो वायुः मस्तकदेशे संचारं कृत्वा पूर्ववत् वर्णानभिव्यञ्जयति। स उत्तमस्वर इति पठ्यते॥

३१४. **पत्नीसंयाजप्रचारः**—शंयुवाकानन्तरम् अध्वर्युर्होत्रे वेदं प्रदाय दक्षिणहस्तेन स्रुवमाज्यस्थालीं सव्येन जुहूमादाय दक्षिणेन यदा गार्हपत्यदक्षिणाग्न्योर्मध्येन गत्वा स्वयं पत्नीपश्चाद्भागेन गत्वा स्रुवादीनि पत्नीपुरोभागेन नीत्वा गार्हपत्यस्य पश्चादूर्ध्वजानुरुपविश्य, होतुः सकाशात् वेदं गृहीत्वा जुह्वा अधस्तादुपभृत्स्थाने धृत्वा आश्राव्य प्रत्याश्रावितो होतारं यजेति प्रेष्य तेन वषट्कृते आज्यस्थाल्याज्येन चतुरवत्तेन जुह्वा गार्हपत्ये सोमाय जुहोति। पुनश्चतुरवत्तेन त्वष्ट्रे, ततो देवानां पत्नीभ्यः, ततो यजमानस्य प्रजाकामत्वे राकायै सिनीवाल्यै कुह्वै अनुमत्यै च पृथक्-पृथक्

१. द्र० पाणिनीया (श्लोकात्मिका) शिक्षा ३६।

२. वही, ३६।

चतुरवत्तेन हुत्वा, स्वाहान्तैरेतैरेव चतुर्भिर्नाममन्त्रैः स्रुवाहुतीर्हुत्वा त्रिभिर्ऋङ्मन्त्रैः स्रुवाहुतीरेव हुत्वा आश्रावणादि कृत्वा अग्नये गृहपतये यजति, देवानां पत्नीनां यागकाले गार्हपत्यकुण्डस्योपरि पूर्वभागे अन्तर्धानाय अन्तर्धानकटम् उदगग्रं स्थापयित्वा देवानां पत्नीरिष्ट्वा होतुरग्रेण गच्छति। सोऽयं पत्नीसंयाजप्रचार इत्युच्यते ॥

३१५. **आज्येडा**—तत्र गत्वा पूर्ववत् होतुरङ्गुलिपर्वणी अङ्क्त्वा होतुर्हस्ते चतुष्कृत्व आज्यं स्रुवेण ददाति। एतदाज्यं आज्येडा इत्युच्यते ॥

३१६. **आज्येडोपह्वानम्**—पूर्वम् इडापात्रं गृहीत्वा होता कांश्चिन्मन्त्रान् उच्चैः कांश्चिदुपांशु पठति। तदा अध्वर्युयजमानाग्नीध्राः इडापात्रमन्वारभन्ते। आज्येडां गृहीत्वा यदा पूर्ववत् मन्त्रान् पठति तदा अध्वर्युः पत्नी चान्वारभते। अयं मन्त्रपाठः आज्येडोपह्वानमित्युच्यते ॥

३१७. **आज्येडाप्राशनम्**—ततो ऽध्वर्युराग्नीध्रहस्ते षट्कृत्वः आज्यं स्रुवेण ददाति। होता स्वहस्तगतमाज्यं प्राश्नाति। आग्नीध्रश्च स्वहस्तगतमाज्यं प्राश्नाति। अत्र होतृकर्तृकं प्राशनम् आज्येडाप्राशनमित्युच्यते ॥

३१८. **आज्येडामार्जनम्**—तत आचम्य होता परिस्तरणैरञ्जलिमन्तर्धाय अन्येनापः सेचयति। आग्नीध्रस्तं वर्हिषि दक्षिणम् उत्तानं हस्तं निधाय सव्येन जलं सिञ्चति। एतदाज्येडामार्जनमित्युच्यते ॥

३१९. **दक्षिणाग्निप्रायश्चित्तहोमः**—एतदनन्तरं[1] शंयुवाकस्य विकल्पः अध्वर्युर्जुह्वां चतुर्गृहीतं गृहीत्वा सव्येनाङ्गेन होतुरग्रेण गार्हपत्यस्य पश्चिममार्गेण गत्वा दक्षिणाग्नौ मन्त्रेण जुहोति। अयं दक्षिणाग्निप्रायश्चित्तहोम इत्युच्यते ॥

३२०. **फलीकरणहोमः**—अपरं चतुर्गृहीतं गृहीत्वा इध्मप्रव्रश्चनान्यभ्याधाय जुह्वां फलीकरणानोप्य मन्त्रेण जुहोति। अयं फलीकरणहोम इत्युच्यते ॥

३२१. **वेदवाचनम्**—ततः अपरेण गार्हपत्यम् उत्तरतो गत्वा यजमानाय वेदं दत्त्वा मन्त्रं वाचयति। ततो यजमानाद् वेदमादाय होत्रे प्रददाति। इदं वेदवाचनमित्युच्यते ॥

३२२. **पत्नीवेदवाचनम्**—होता 'वेदं पत्न्यै प्रदाय मन्त्रं वाचयति'। अत्र

---

१. अत्र मूलपाठे ३१९–३२० संख्ययोः पदार्थौ व्यामिश्रिताविवास्ताम्। तौ पृथक् प्रदर्शितौ।

'होताध्वर्युर्वा' इत्याश्वलायनसूत्रात् (१।११।७) अध्वर्युर्वा वाचयति। एतत् पत्नीवेदवाचनमित्युच्यते ॥

३२३. **वेदशिरःकरणकनाभ्यालम्भनम्**—ततः पत्नी वेदशिरसा मन्त्रेण स्वनाभिं स्पृशति। एतद् वेदशिरःकरणकनाभ्यालम्भनमित्युच्यते ॥

३२४. **पत्नीयोक्त्रविमोचनम्**—बौधायनसूत्रपठितत्वादध्वर्युः, आश्वलायनसूत्रपठितत्वात् होता वा पत्न्याः कटौ आग्नीध्रेण पूर्वं निबद्धं योक्त्रं मन्त्रेण स्वस्वसूत्रपठितेन विमुञ्चति। एतत्पत्नीयोक्त्रविमोचनमित्युच्यते ॥

३२५. **मुखविमार्जनम्**—ततः पूर्ववत् होताध्वर्युर्वा तद्योक्त्रं पत्न्यञ्जलौ निधाय तस्मिन् जलमानयति मन्त्रेण। पत्नी तु तेन जलेन स्वमुखमार्जनं बाह्याङ्गे करोति। इदं मुखविमार्जनमित्युच्यते ॥

३२६. **उत्तरगार्हपत्यसमिदाधानम्**—ततो गार्हपत्यं परिषेचयित्वा चतस्रः समिधो मन्त्रैः आधापयित्वा पुनः परिषेचयति। एतद् उत्तरगार्हपत्यसमिदाधानमित्युच्यते ॥

३२७. **पत्नीनिष्क्रमणम्**—ततः पत्नी तूष्णीं यथागतं तीर्थेन विहाराद् बहिर्निष्क्रामति। एतत् पत्नीनिष्क्रमणमित्युच्यते ॥

३२८. **ध्रुवाप्यायनम्**—अध्वर्युः उत्तरेण गार्हपत्यं प्राङागत्य आज्यस्थाल्याज्येन ध्रुवां मन्त्रेण पूरयति। यजमानोऽपि तं मन्त्रं पठति। एतत् ध्रुवाप्यायनमित्युच्यते ॥

३२९. **यजमानभागप्राशनम्**—ततो यजमानः स्वभागं ब्रह्मणा प्राशित्रहरणस्य पश्चात् कुशेषु वेद्यां स्थापितं मन्त्रेण प्राश्नाति। एतद् यजमानभागप्राशनमित्युच्यते।

३३०. **अध्वर्युकर्तृकनित्यप्रायश्चित्तहोमः**—ततोऽध्वर्युः आहवनीये आज्यस्थाल्याज्येन स्रुवेण देवदेवताकया ऋचा एकामाहुतिं हुत्वा, तथैव अल्पाक्षरैर्यजुर्मन्त्रैर्नवाहुतीर्हुत्वा, चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा, द्वाभ्यामग्नीवरुणदेवताकाभ्यां ऋग्भ्यां हुत्वा, द्वाभ्यामृग्भ्यां अयसे अग्नये हुत्वा, देवदेवताकया एकया ऋचा हुत्वा, एकया ऋचा अग्नये स्विष्टकृते हुत्वा, प्रजापतिदेवताकया एकया ऋचा जुहोति। अयं होमः अध्वर्युकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३३१. **बर्हिरेकदेशानुप्रहरणम्**—ततो वेद्यास्तृतसर्वबर्हिर्मुष्टिभ्यः प्रत्येकं किंचित् किंचिद् गृहीत्वा ध्रुवायां मन्त्रेण समज्य मन्त्रेणाहवनीये प्रक्षिपति। तदेतद् बर्हिरेकदेशानुप्रहरणमित्युच्यते ॥

३३२. **समिष्टयजुर्होमः**—तत उत्थाय दक्षिणं पादं वेदिमध्ये निधाय ध्रुवया मन्त्रेण जुहोति। सोऽयं समिष्टयजुर्होम इत्युच्यते ॥

३३३. **समिष्टयजुः [मन्त्रः]**—येन मन्त्रेण जुहोति स मन्त्रः समिष्ट-यजुरित्युच्यते ॥

३३४. **प्रणीताप्रणयननिनयनम्**--ततः प्रणीतापात्रं वेद्यां निधाय यजमानं मन्त्रं वाचयति। ततो ऽध्वर्यु यजमानौ प्रतिदिशं प्रणीताजलेन कुशैर्मार्जयतः। **'प्राच्यां दिशि देवास्'** इत्यादिमन्त्रेण प्राच्यां, **'दक्षिणस्याम्'** इत्यादिमन्त्रेण दक्षिणस्यां, ततोऽप उपस्पृश्य **'प्रतीच्याम्'** इत्यादिमन्त्रेण प्रतीच्याम्, **'उदीच्याम्'** इत्यादिमन्त्रेणोदीच्याम्। ततो ऽध्वर्युः प्रणीताजलशेषं वेद्यां मन्त्रेण प्रक्षिपति। एतत् प्रणीताप्रणयननिनयनमित्युच्यते ॥

३३५. **उदकोदुक्षणम्**——होता तु पूर्वोक्तपत्नीयोक्त्रविमोचनानन्तरमेव तद् योक्त्रं गृहीत्वा गार्हपत्यस्य पश्चाद् द्विगुणं प्राक्पाशं निधायोपरिष्टा-दस्योदगग्राणि वेदतृणानि निधाय, अग्निहोत्रहवणीं जलपूर्णां तस्योपरि पिधाय, वेदतृणैरभिमृश्य, पत्नीं मन्त्रं वाचयति। ततः प्रतिदिशमुदकमूर्ध्वं सिञ्चन् तथैवोदकमूर्ध्वं सिञ्चतीं पत्नीं मन्त्रं वाचयति। तदेतदुदकोदुक्षण-मित्युच्यते ॥

३३६. **अग्निहोत्रहवणीजलनिनयनम्**—तत एकया ऋचा एकेन यजुर्मन्त्रेण च अग्निहोत्रहवणीगतेन जलेन दर्भैर्होता पत्नी च आत्मानं मार्जयेते। ततो यजुर्मन्त्रेण उभौ निर्ऋतिदिशि जलं सिञ्चतः। ततो होता वेदतृणानामधस्तात् कृतायां पत्न्यञ्जलौ तथाकृते स्वसव्यहस्तेन च दक्षिण-हस्ते अग्निहोत्रहवणीमादाय तज्जलं सर्वं प्रक्षिपति। तदेतदग्निहोत्रहवणी-जलनिनयनमित्युच्यते ॥

३३७. **वेदस्तरणम्**—होता वेदतृणानि अग्रभागे दक्षिणहस्तेन धृत्वा तन्तुशब्दवता मन्त्रेण गार्हपत्यादारभ्याहवनीयपर्यन्तम् अविच्छिन्नं स्तृणाति। एतत् वेदस्तरणमित्युच्यते ॥

३३८. **होतृकर्तृकनित्यप्रायश्चित्तहोमः**—तत आहवनीयस्य वायव्यदेशे तिष्ठन् आज्यस्थाल्याज्येन स्रुवेण त्रिभिर्ऋङ्मन्त्रैः प्रत्येकं हुत्वा तिसृभिर्व्या-हृतिभिश्च प्रत्येकं हुत्वा, समस्तव्याहृतिमन्त्रेण जुहोति। अयं सप्ताहुतिहोमः होतृकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३३९. **संस्थाजपः**—ततस्तत्रैव तिष्ठन् एकया ऋचा आहवनीयमुप-

तिष्ठते । ततस्तीर्थेन निष्क्रामति । सा ऋक् होतृकर्मणां मध्ये चरमकर्मकरणत्वात् संस्थाजप इत्युच्यते ॥

३४०. **ब्रह्मकर्तृकनित्यप्रायश्चित्तहोमः**—ब्रह्मा तु प्रणीताप्रणयननिनयनानन्तरं होतृवत् तत्रैव तिष्ठन् आहवनीये सप्ताहुतीर्हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रामति । अयं होमो ब्रह्मकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३४१. **विष्णुक्रमक्रमणम्**—एतद्धोमानन्तरं यजमान उत्थाय प्राङ्मुखो भूत्वा स्वस्थानादारभ्य त्रिभिर्यजुर्मन्त्रैः प्रत्येकं दक्षिणेन पदा द्वाभ्यां पादाभ्यां उड्डीय वा प्राचीं दिशं गच्छति । तत्रैव स्थित्वा एकं यजुर्मन्त्रं पठति । एतत्कर्म विष्णुक्रमक्रमणमित्युच्यते ॥

३४२. **विष्णुक्रममन्त्रा**—ते च मन्त्रा विष्णुक्रमपदवाच्या भवन्ति ॥

३४३. **आहवनीयोपस्थानम्**—ततस्तत्रैव तिष्ठन् मन्त्रेणाहवनीयमुपतिष्ठते । एतदाहवनीयोपस्थानमित्युच्यते ॥

३४४. **आदित्योपस्थानम्**—ततो बहिर्निष्क्रम्य तत्रैव वा तिष्ठन् मन्त्रेणादित्यमुपतिष्ठते । एतदादित्योपस्थानमित्युच्यते ॥

३४५. **आत्ममार्जनम्**—ततो द्विषन्तं ध्यायन् मन्त्रेण दर्भेणात्मानं मार्जयते । एतदात्ममार्जनमित्युच्यते ॥

३४६. **हृदयाभिमर्शनम्**—ततो दर्भं तिरस्याप उपस्पृश्य स्वहृदयं मन्त्रेणाभिमृशति । तदेतत् हृदयाभिमर्शनमित्युच्यते ॥

३४७. **यजमानावर्तनम्**—ततोऽप उपस्पृश्य उदङ्मुखः सन् मन्त्रेण प्रदक्षिणमावृत्य मन्त्रेणापसव्यमावर्तते । एतद् यजमानावर्तनमित्युच्यते ॥

३४८. **यजमानकर्तृकगार्हपत्योपस्थानम्**—तत उपविश्याहवनीये मन्त्रेण समिधमाधाय, मन्त्रेणाहवनीयमुपस्थाय, स्वायतन एव तिष्ठन् द्वाभ्यामृग्भ्यां एकेन यजुर्मन्त्रेण च गार्हपत्यमुपतिष्ठते । तस्मिन् यजुर्मन्त्रे तु मह्यमितिपदानन्तरं स्वनाम शर्मपदघटितं चतुर्थ्यन्तमुक्त्वा **ज्योतिष्मतीमि**त्यादिमन्त्रशेषं ब्रूयात् । ततो यावन्तो यजमानस्य पुत्राः तावतां ज्येष्ठानुक्रमेण प्रत्येकं स्वनामवत् चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्यादिमन्त्रशेषमुक्त्वा अन्ते 'तन्तवे' इति चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्यादि ब्रूयात् । एतद् यजमानकर्तृकगार्हपत्योपस्थानमित्युच्यते ॥

३४९. **यज्ञविमोकः**—तत एकं यजुर्मन्त्रं पठति । स यज्ञसमाप्तौ पठ्यमानत्वात् यज्ञविमोक इत्युच्यते ॥

३५०. **उत्तराहवनीयपरिषेकः**—ततः पूर्ववत् तिरः पवित्रमप आचम्य आहवनीयं परिषिच्य समन्त्रकं चतस्रः समिध आधाय पुनः परिषिञ्चति । अयमुत्तराहवनीयपरिषेक इत्युच्यते ॥

३५१. **यज्ञस्य पुनरालम्भः**—तत एकामृचं जपति । सा ऋक् यज्ञस्य पुनरालम्भ इत्युच्यते ॥

३५२. **गोमतीजपम्**—ततः प्रागुद्गोय गोपदवतीमृचं जपति । अयं गोमतीजप इत्युच्यते ॥

३५३. **आत्मसंप्रेषः**—ततो ब्राह्मणभोजनाय आत्मानं बौधायनसूत्रोक्तमार्गेण प्रेष्यति । सोऽयमात्मसंप्रेष इत्युच्यते ॥

**उक्तान्यैष्टिकपदार्थानां नामानि ।**

**इदानीमाधानसंबन्धिनां पदार्थानां नामान्युच्यन्ते—**

३५४. **अग्न्याधानम्, आधानं च**—तत्र गार्हपत्यदक्षिणाग्न्याहवनीयनामकानां त्रयाणामग्नीनां तत्तदायतनेषु स्व-स्वसूत्रोक्तविधिना स्थापनम् अग्न्याधानमाधानमिति चोच्यते ॥

३५५. **कूष्माण्डहोमः**—समस्तपातकनिवर्हणार्थम् आधानाधिकारसिद्ध्यर्थम् आधानात् प्राक् स्थण्डिलकरणाद्यग्निप्रतिष्ठापनान्तं कृत्वा, आघारहोमानन्तरं गायत्रीमन्त्रेण सवित्रे चरुं हुत्वा, स्विष्टकृदर्थम् अवदाय, अन्तःपरिधि सादयित्वा, एकविंशत्यृचस्य **यद्देवा** इत्यादिकस्य प्रथमानुवाकस्य एकैकया ऋचा आज्याहुतीर्हुत्वा, त्रयोदशर्चस्य **यददीव्यमित्यादिकस्य** द्वितीयानुवाकस्य एकैकयर्चा तथैव हुत्वा, सप्तदशर्चस्य **आयुष्ट** इत्याद्यनुवाकस्य ऋग्भिस्तथैव हुत्वा **सिंहे व्याघ्र** इत्यादिकस्याष्टर्चस्यानुवाकस्य **ऋग्भिस्तथैव** हुत्वा, समित्पाणिर्यजमानः स्वायतने तिष्ठन् **वैश्वानरायेत्यादिकेन** द्वादशर्चेनानुवाकेनाग्निमुपस्थाय, त्रयोदश समिध आधाय, एकया ऋचा हुत्वा, स्विष्टकृदादिहोमशेषं समाप्य, वरं[1] दत्वा, अग्नेः पुरस्तात् अश्वत्थपर्णेषु हुतशेषं निदध्यात् । अयं होमः पापतारतम्यानुसारेण संवत्सरं मासं चतुर्विंशतिदिनानि षट् दिनानि त्रीणि दिनानि वा क्रियते । अस्य होमस्य अमावास्यायां पौर्णमास्यां वा आरम्भः यावन्ति होमदिनानि तावत्सु दिनेषु स्त्रीसंगममांसभक्षणपर्यङ्कशयनासत्यभाषणवर्जनम् । अयं कूष्माण्डपदेन श्रुत्यादिषु प्रसिद्धः ॥

[१. द्र० पदार्थः ३५८]

३५६. **गणहोमः**—अथान्यो होमः तत्र पूर्वाह्णे गृह्यमग्निं प्रतिष्ठाप्य आघारहोमान्तं कृत्वा गायत्र्या सवित्रे चरुणा हुत्वा **'अग्ने नय'** इति षडृचेनानुवाकेन प्रत्यृचं चरुणा हुत्वा **'सहस्रशीर्षा'** इत्यष्टादशर्चेनानुवाकेन प्रत्यृचं हुत्वा **'अग्नेर्मन्व'** इति द्वाविंशत्यृचेनानुवाकेन तथैव हुत्वा **'या वामिन्द्र'** इति चतसृभिर्ऋग्भिस्तथैव हुत्वा **'यो वामिन्द्र'** इत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा **'पवमानसुवः'** इति सप्तदशर्चेनानुवाकेन तथैव हुत्वा **'यद्देवा'** इति विंशत्यृचेनानुवाकेन तथैव हुत्वा **'वैश्वानरो न'** इत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा चतसृभिर्व्याहृतिभिः प्रत्येकं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत। ततो जलपूर्णं पात्रं गृहीत्वा नैर्ऋतीं दिशं गत्वा चतुष्पथे गोमयेनोपलिप्य तत्रोपविश्य जलपात्रं पुरस्तान्निधाय तस्य जले आत्मनः प्रतिबिम्बं अवेक्षमाणो मन्त्रान् जपेत्। ते च मन्त्राः **'सिंहे मे'** इत्यादयस्त्रिसप्ततिसंख्याकाः। ततस्तत्पात्रगतं जलं नैर्ऋत्यां दिशि स्ववैरिणो यस्यां दिशि निवसन्ति तस्यां वा दिशि मन्त्रेण निनयति। ततस्तत्पात्रं तस्यामेव दिशि परास्य पृष्ठतोऽनवेक्षमाणः सन् यथागतमागत्य हस्तौ पादौ प्रक्षाल्य आचमनं कुर्यात्। एवमेकाहं त्र्यहं सप्ताहं पञ्चदश दिनानि एकं मासं मासद्वयं षण्मासं संवत्सरं वा शक्त्यनुसारेण कुर्यात्। कर्मान्ते ब्राह्मणान् पायसान्नेन भोजयेत्, गोहिरण्यादि च ब्राह्मणेभ्यो दद्यात। अयं होमः आधानाधिकारसंपादकसमस्तपापक्षयकरः, अथ च सर्वकर्मानुष्ठानाधिकारसंपादकः। सोऽय गणहोम इत्युच्यते ॥

३५७. **स्थण्डिलम्**—मृदा निर्मितं समचतुरस्रं प्रतिदिशम् अष्टादशाङ्गुलविस्तृतं होमानुसारेण ततोऽधिकं वा न तु ततो न्यूनं चतुरङ्गुलोच्चं मध्योन्नतं स्थण्डिलमित्युच्यते ॥

३५८. **वरः**—दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियतेऽनेनेति करणव्युत्पत्त्या वर इत्युच्यते ॥

३५९. **नान्दीश्राद्धं वृद्धिश्राद्धं वा**--आधानात् पूर्वदिने नान्दीश्राद्धं[1] क्रियते। यत्र सत्यवसुसंज्ञका विश्वेदेवाः तिलकार्यं यवैरेव क्रियते, पैतृकमपि कर्म सव्येनैव क्रियते, विश्वेषां देवानां पूजनानन्तरं मातृपितामहीप्रपितामह्य इज्यन्ते, ततः पितृपितामहप्रपितामहाः, ततो मातामहमातुःपितामहमातुः प्रपितामहाः सपत्नीकाः। दर्भास्तु ऋजवोऽमूलाः साग्राः पितृकार्येऽपि भवन्ति। ब्राह्मणाश्च पितृस्थानेऽपि युग्मा भवन्ति। द्राक्षाः आमलकी

१. स्मार्तमाधुनिकमेतन्नान्दीश्राद्धम्, नहि श्रौतसूत्रेषूपलभ्यते। अग्रेऽपि बहवः पदार्था उच्छ्रौतसूत्रं निर्दिश्यन्ते।

फलानि च दक्षिणात्वेन दीयन्ते । पितृणां नामगोत्रोच्चारणं नैव क्रियते, किंतु तस्य स्थाने सर्वत्र नान्दीमुखा इत्युच्यते । सर्वत्र मन्त्रान्ते वृद्धिरिति पद-मुच्चार्यते तत् नान्दीश्राद्धं वृद्धिश्राद्धमिति चोच्यते ॥

३६०. **उदकशान्ति**—आधानात् पूर्वदिने रात्रौ उदकशान्तिः प्रतिसर-बन्धश्च[1] क्रियते । शुचिर्भूत्वा कर्म आधानाङ्गभूतत्वेन संकल्प्य, गोमयेन गोचर्ममात्रं स्थलम् उपलिप्य, दर्भेण यज्ञियकाष्ठेन वा तूष्णीं भूमिमुद्धृत्य, जलेन तूष्णीमवोक्ष्य, तत्र पञ्चप्रस्थपरिमितव्रीहीणां तन्दुलानां वा स्थण्डिलं कृत्वा, स्थण्डिलमध्ये प्रतीचीमारभ्य प्राचीपर्यन्तं मन्त्रेण दर्भेण लेखां कृत्वा, स्थण्डिलोपरि दक्षिणभागे मन्त्रेण पूर्ववल्लेखां कृत्वा, उत्तरभागे तथैव लेखां कृत्वा, स्थण्डिलमध्ये दक्षिणां दिशमारभ्य उदीचीपर्यन्तं लेखां कृत्वा, अप उपस्पृश्य नैर्ऋतीं दिशमारभ्य वायवीपर्यन्तं लेखां मन्त्रेण कृत्वा, आग्नेयी-मारभ्य ऐशानीपर्यन्तं लेखां मन्त्रेण कृत्वा, लेखाकरणं दर्भं यज्ञियकाष्ठं वा व्याहृतिमन्त्रेण उत्तरस्यां दिशि निरस्य, स्थण्डिलाद् बहिःरुत्तरतः प्रागग्रान् दर्भानास्तीर्य, तेषु प्रोक्षणीमुदकुम्भं पञ्चप्रस्थयवपूर्णकांस्यपात्रे सूत्रद्वयं च सादयित्वा, सर्वाणि पात्राणि दर्भैः प्रच्छाद्य, पवित्रं तूष्णीं कृत्वा, प्रोक्षणी-पात्रमुत्तानं कृत्वा, तत्र उदगग्रं पवित्रं निधाय, उदकमानीय तूष्णीं त्रिरुत्पूय, प्रोक्षणीं पवित्रेण प्रोक्ष्य, उदकुम्भमुत्तानं कृत्वा, पवित्रेण प्रोक्ष्य, कांस्यापात्र-स्थसूत्रद्वयं च प्रोक्ष्य, उदकुम्भं सुगन्धिद्रव्येण गुग्गुल्वादिना धूपयित्वा, स्थण्डिलोपरि प्रागग्रान् दर्भानास्तीर्य, गन्धोदकेनाक्षतपुष्पैः फलैश्चावकीर्य, तत्रोदकुम्भं निधाय, तस्योपरि पवित्रमुदगग्रं निधाय, उदकुम्भे उदकं मन्त्रेण पूरयति । उदकुम्भे गायत्रीमन्त्रेण यवाक्षततन्दुलानोप्य, उदकुम्भस्य सम-न्तात् व्याहृतिमन्त्रेण पुष्पदूर्वाफलान्यवकीर्य, उदकुम्भं दूर्वादर्भैः प्रच्छाद्य, उदकुम्भस्य पुरस्तात् उदगग्रान् दर्भान् मन्त्रेण परिस्तीर्य, दक्षिणतो व्याहृति-मन्त्रेण प्रागग्रान् पश्चिमतः उदगग्रान् मन्त्रेण उत्तरतः प्रागग्रान् मन्त्रेण परिस्तीर्य, चतुरो ब्राह्मणान् चतसृषु पूर्वादिदिक्षु जपकर्तॄन् वृत्वा, यजमानो ब्राह्मणाश्च दर्भहस्ताः दर्भाग्रैः कुम्भं स्पृशन्तो जपन्ति, **'शं न'** इत्यृचं गायत्रीं पच्छोऽर्द्धर्चशः सर्वां च, ततो वेदादीन् चतुरः, ततः **'कृणुष्व'** इति सूक्तं रक्षोघ्नं **'मदे चिद्'** इत्यर्धर्चम् **'इन्द्रो दधीच'** इत्यनुवाकं **'यत इन्द्र'** इति द्वे ऋचौ **'महां इन्द्र'** इति द्वे ऋचौ **'यद्देवाः पुरःसद'** इति पञ्चपर्यायान् **'अग्नये रक्षोघ्ने'** इति पञ्च **'अग्निरायुष्मान्'** इति पञ्च **'या वामिन्द्र'** इति चतस्रः

१. द्र० पदार्थः ३६१, ३६२ ।

**यो वामिन्द्र'** इत्यष्टौ **'अग्ने यशस्विन्'** इति चतस्रः **'हिरण्यवर्णाः शुचयः'** इति चतस्रः **'ऋताषाडृत'** इत्यनुवाकं **'नमो अस्तु सर्पेभ्य'** इति चतस्रः **अयं पुरो हरीति** पञ्च पर्यायान्, **आशुः शिशान** इत्यनुवाकं, **शं च म** इत्यनुवाकं **ममाग्ने वर्चः** इत्यनुवाकम् **अग्नेर्मन्वः** इत्यनुवाकं **समीची नामासि** इति षट् पर्यायान् **हेतयो नाम स्थ** इत्यनुवाकं **शतायुधाय** इति पञ्च **भूतं भव्यं भविष्यद्** इत्यनुवाकं **चक्षुषो हेतिः** इत्यारभ्य **भ्रातृव्यं पातयामि** इत्यन्तं **प्राणो रक्षति** इत्यनुवाकं **सिंहे व्याघ्रे** इत्यनुवाकम् **अहमस्मि** इत्यनुवाकं **ता सूर्या** इत्यनुवाकम् **अग्निर्नः पातु** इत्यनुवाकम् **ऋध्यास्म** इत्यनुवाकं **नवो नव** इत्यनुवाकम् **अग्नये** इत्यादीनुपहोममन्त्रान् **दधिक्राव्ण** इत्यृचम् **आपो हि** इत्यृच **यच्चिद्धि ते** इत्यृचम् **इमं म** इत्यृचं **पावमानीः उदुत्तमम्** इति सूक्तं **परि णो रुद्रस्य** इति सूक्तं **ब्रह्म जज्ञानम्** इति ब्रह्मसूक्तं **विष्णोर्नु कम** इति विष्णुसूक्तं **जातवेदसे** इति सूक्तं **हिरण्यवर्णाम्** इति श्रीसूक्तं **तच्छयोः** इत्यनुवाकं **नमो ब्रह्मणे** इति मन्त्रं त्रिवारं जपन्ति। ततः प्रणवेनोदकुम्भमुत्थाप्य प्रणवं त्रिरुच्चार्य पुनरुदकुम्भं तत्रैव स्थापयित्वा, वृता ब्राह्मणाः सपत्नीकं यजमानं उदकुम्भोदकेन दर्भाग्रैः व्याहृतिभिः प्रोक्षन्ति। इदं सर्वं कर्म उदकशान्तिरित्युच्यते ॥

३६१. **प्रतिसरबन्धः**—अथ ब्राह्मणाः सूत्रद्वयमादाय नागेशं वासुकिं तत्र ध्यात्वा **त्र्यम्बक**मन्त्रेण त्रिवारम् ऊर्ध्वं भस्मना सूत्रद्वयमालिप्य **अग्निरायुष्मान्** इति मन्त्रेण यजमानस्य दक्षिणहस्तं गृहीत्वा **बृहत्सामा** इति मन्त्रेण एक सूत्रमपरं सूत्रं पत्न्या वामहस्ते बध्नीयुः। बन्धनस्थाने **यो ब्रह्मणा** इति मन्त्रेण भस्मना रक्षां कुर्युः। यजमानः पूर्वस्यां दिशि जपकर्त्रे ब्राह्मणाय हिरण्यं दद्यात्, दक्षिणस्यां दिशि जपकर्त्रे रजतं, पश्चिमदिशि जपकर्त्रे कांस्यं, उत्तरस्यां दिशि जपकर्त्रे वस्त्रं दद्यात्। इदं कर्म प्रतिसरबन्ध इत्युच्यते ।

३६२. **प्रतिसरम्**—बध्यमानं सूत्रद्वयं प्रतिसरपदवाच्यम् ॥

३६३. **पवनम्** –ततः प्रातःकाले एकविंशतिदर्भाणां त्रीणि पिञ्जूलानि[1] कृत्वा एकेन पिञ्जूलेन कण्ठमारभ्य मुखपर्यन्तं मार्जयेद्, द्वितीयेन नाभिमारभ्य कण्ठपर्यन्तं मार्जयेत्, तृतीयेन नाभेरधस्तात् गुल्फपर्यन्तं मार्जयेत्। ततः पिञ्जूलानि प्रोक्ष्य उदीच्यां दिशि परित्यजेत्। ततोऽप उपस्पृशति। एतत्कर्म पवनमित्युच्यते ॥

३६४. **पिञ्जूलम्**—सप्तानां दर्भाणां स्तबकः[2] पिञ्जूलमित्युच्यते।

---

१. द्र० पदार्थः ३६४ ।    २. गुच्छकस्तु स्तबकः । अमर २।४।१६।

३६५. **मन्त्राचमनम्**—ततः **'आपो हि ष्ठा'** इति तिसृभिर्ऋग्भिः प्रत्यृचं जलमाचामेत्। एतत् मन्त्राचमनमित्युच्यते ॥

३६६. **मन्त्रमार्जनं, मन्त्रप्रोक्षणं वा**—ततः आत्मानं मन्त्रैर्मार्जयते। ते च मन्त्राः **दधिक्राव्णः** इत्येका, **यत्किं चेदम्** इत्येका, **कितवास** इत्येका **हिरण्यवर्णा** इति चतस्रः, **पवमानः सुवः** इत्यनुवाकः, **कया नः** इति तिस्रः, **तरत्समन्दी** इति चतस्रः, समस्तव्याहृतिः, **शं नो देवीः** इत्येका, एवं पत्न्यपि पवनादि कुर्यात्। इदं मन्त्रमार्जनं मन्त्रप्रोक्षणमिति चोच्यते ॥

३६७. **पुण्याहवाचनम् स्वस्तिवाचनं वा**—ऋत्विजश्च पवनादित्रयं कुर्युः। ततः पुण्याहवाचनम्, तत्राग्निः प्रीयतामिति विशेषः। तच्चेत्थम्—आदौ गणपतिं षोडशोपचारैः संपूज्य **मही द्यौः** इति भूमिं संप्रार्थ्य **ओषधयः सम्** इति भूमौ शक्त्यनुसारेण व्रीहीणां राशिद्वयं उदक्संस्थं विधाय, **आकलशेषु** इति राश्योः कलशद्वयं निधाय, **इमं मे गङ्गे** इति कलशयोर्जलमापूर्य **गन्धद्वाराम्** इति गन्धं प्रक्षिप्य, **या ओषधीः** इति सप्तधान्यानि प्रक्षिप्य, **काण्डात्काण्डात्** इति दूर्वाः **अश्वत्थेव** इति पञ्च पल्लावान्, **स्योना पृथिवी** इति सप्त मृदः, **स हि रत्नानि** इति पञ्च रत्नानि, **हिरण्यरूप** इति हिरण्यं च प्रक्षिप्य, **युवा सुवासाः** इति द्विसूत्र्या कलशकण्ठौ वेष्ठयित्वा, **पूर्णा दर्वि** इति कलशयोरुपरि पूर्णपात्रे स्थापयेत्। ततः कलशयो**स्तत्त्वायामीति** वरुणमावाह्य षोडशोपचारैः पूजयित्वा युग्मान् ब्राह्मणान् उदङ्मुखानुपवेशयेत्। ब्राह्मणास्तु सपत्नीकं यजमानं प्रति ब्रूयुः—**मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भवेति**। एताः सत्या आशिषः सन्तु इति यजमानो ब्रूयात्। ततः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णमुत्तरकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुःप्रमाणेन पुण्याहं **दीर्घमायुरस्तु** इत्यनेन मन्त्रेण उत्तरकलशं स्वशिरसा पत्नीशिरसा विवाहादौ संस्कार्यं शिरसा च संयोज्य, कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव कृत्वा पुनर्गृहीत्वा मन्त्रेण तथैव इति त्रिवारं कुर्यात्। ततो यजमानः **शिवा आपः सन्त्विति भवन्तो ब्रुवन्त्विति** ब्राह्मणहस्ते जलं दद्यात्। ब्राह्मणाश्च **शिवा आपः सन्त्विति** वदेयुः। ततो यजमानो 'गन्धाः पान्तु सुमङ्गल्यं चास्तु' इति 'भवन्तो ब्रुवन्तु' इति ब्राह्मणहस्ते चन्दनं दद्यात्। ब्राह्मणास्तु 'गन्धाः पान्तु सुमङ्गल्यं चास्तु' इति वदेयुः। 'अक्षताः पान्तुः आयुष्यमस्तु' इति 'भवन्तो ब्रुवन्तु' इति यजमानः अक्षतान् दद्यात्। ते च

'अक्षताः पान्तु आयुष्यमस्तु' इति ब्रूयुः। ततः 'पुष्पाणि पान्तु सौश्रियमस्तु' इति 'भवन्तो ब्रुवन्तु' इति यजमानः पुष्पाणि दद्यात्। ब्राह्मणास्तु 'पुष्पाणि पान्तु सौश्रियमस्तु' इति ब्रूयुः। 'ताम्बूलानि पान्तु ऐश्वर्यमस्तु' इति 'भवन्तो ब्रुवन्तु' इति यजमानस्ताम्बूलानि दद्यात्। ब्राह्मणास्तु 'ताम्बूलानि पान्तु ऐश्वर्यमस्तु' इति ब्रूयुः। 'दक्षिणाः पान्तु बहुदेयं चास्तु' इति यजमानो दक्षिणां दद्यात्। ब्राह्मणास्तु 'दक्षिणाः पान्तु बहुदेयं चास्तु, इति ब्रूयुः। यजमानो 'दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु' इति जलं दद्यात्। ब्राह्मणास्तु दीर्घमायुरित्यादि अस्त्वित्यन्तं ब्रूयुः। ततो यजमानः यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते, तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहृषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति ब्रूयात्। ब्राह्मणाः वाच्यतामिति ब्रूयु;। यजमानः **भद्रं कर्णेभिरि**त्यृचं **द्रविणोदा द्रविणस** इत्यृचं **सविता पश्चातादि**त्यृचं **नवो नव** इत्यृचं **उच्चा दिवी**त्यृचं **सं त्वा सिञ्चामि** इत्यर्धर्चं च पठित्वा 'व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयताम्' इति प्रार्थयेत्। 'समाहितमनसः स्मः' इति ब्राह्मणा वदेयुः। 'प्रसीदन्तु भवन्तः' इति यजमानः, 'प्रसन्नाः स्मः' इति ब्राह्मणाः। ततो यजमानः 'शान्तिरस्तु' इत्यादिभिः 'इष्टसम्पदस्तु' इत्यन्तैराशीर्मन्त्रैः पात्रे जलं सिञ्चति। 'अरिष्टनिरसनमस्तु, यत्पापं तत्प्रतिहतमस्तु' इति मन्त्राभ्यां पात्राद् बहिर्जलं सिञ्चेत्। पुनः 'यच्छ्रेयस्तदस्तु' इत्यादिभिः 'सर्वा इष्टदेवताः प्रीयन्ताम्' इत्यन्तैर्मन्त्रैः पात्रे जलं सिञ्चेत्। ततो 'हता ब्रह्मद्विष' इत्यादिभिः 'शाम्यन्त्वीतय' इत्यन्तैर्बहिर्जलं सिञ्चति। ततः 'शुभानि वर्धन्ताम्' इत्यादिभिः 'महासेनः प्रीयताम्' इत्यन्तैः पात्रे सिञ्चति। ततः पुण्याहकालान् वाचयिष्ये इति ब्रूयात्। ब्राह्मणास्तु वाच्यतामिति ब्रूयुः। यजमानः **उद्गातेव शकुन** इत्यृचं (ऋ० २।४३।२) **याज्ययेत्यादि संस्कुरुते** इत्यन्तम् ऐतेरेयब्राह्मणं (२।४०) **यत्पुण्य**मित्यादि **कुरुते** इत्यन्तं तैत्तिरीयब्राह्मणं (१।५।२१) च पठित्वा मह्यं सह कुटुम्बिने महाजनान् नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमाणस्य अमुष्य कर्मणः पुण्याहं भवन्तो ब्रुवन्त्विति ब्रूयात्। ब्राह्मणास्तु ओं पुण्याहमिति प्रतिब्रूयुः। इमे वचनप्रतिवचने त्रिवारं पठनीये ततो यजमानः **स्वस्तये वायु**मित्यृचं (ऋ० ५।५१।१२) **आदित्य उदयनीय** इत्यादि **स्वस्त्युद्यन्ती**त्यन्तम् ऐतरेयब्राह्मणं (१।११) **अष्टौ देवा** इत्यादि **अमृतं स्वस्ती**त्यन्तं तैत्तिरीयं च ब्राह्मणं (३।१।२।६) पठित्वा मह्यमित्यादि करिष्यमाणाय अमुष्मै कर्मणे स्वस्ति

प्रोक्ष्य तत्रैवैकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङ्भिसृप्यौदुम्बरान् महापरिधीन् परिधाय 'उता असदन्' इत्यादिमन्त्रेण स्रुगभिमर्शनान्तं कृत्वा परिधीन् योगेन युनक्ति—'युनज्मि ते पृथिवीं ज्योतिषा सह' इति मध्यमं परिधिम्। 'युनज्मि वाचꣳ सह सूर्येण ते' इत्युत्तरम्। सन्नाः स्रुचोऽभिमृशति 'युनज्मि तिस्रो विपृचः सूर्य ते' इति। इदं सौमिकपरिधिस्रुगभिमर्शनमित्युच्यते ॥

२३१. 'विष्णू निष्थ' इत्यादिप्राकृतमन्त्रेण सर्वाण्याज्यान्यभिमन्त्र्य अग्नीषोमीयवत् स्रुवं ध्रुवायामवदधाति। यजमानः 'यन्मे अग्न' इत्यादि पठति। अध्वर्युः अप उपस्पृश्य 'एहि यजमान' इति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रपाद्य नीडे निहितं यच्चर्म तत् फलकयोः प्राचीनग्रीवमुत्तरलोम 'यज्ञ प्रतितिष्ठ' इति मन्त्रेण तूष्णीं वोपस्तृणाति। तस्मिन्नुपांशु सवनातिरिक्तांश्चतुरो ग्राव्णश्चतुर्दिक्षु परस्पराभिमुखाभिषवप्रदेशान् स्थापयित्वा ईषयोर्मध्यमार्गेण राजानमुपावहरन्ति 'हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ' इति।

**सोमराजोपावरोहणम्** – सोमराजन्नेह्यवरोह 'माभेर्मा सं विक्था मा त्वा हिꣳसिष प्रजास्त्वमुपावरोह प्राजास्त्वामुपावरोहन्तु' इति। इदं सोमराजोपावरोहणमुच्यते ॥

२३२. **उद्गातृनिवेदनम्**—राजानं ग्राव्णामुपरि निधाय उद्गातृभ्यः प्राह—'उपावहृतः सोमः' इति। इदमुद्गातृनिवेदनमुच्यते ॥

२३३. **सवनीयपञ्चहोतृहोमः**– ततोऽप उपस्पृश्य 'एहि यजमान' इति यजमानमामन्त्र्य आग्नीध्रीयं गत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसा द्रुतय यजमानेऽन्वारब्धे जुहोति। वाचस्पतये ब्रह्मण इदमिति यजमानः। अयं सवनीयपञ्चहोतृहोम उच्यते ॥

२३४. **आसन्यहोमः**—ततोऽन्येन चतुर्गृहीतेन जुहोति—'आसन्यान्मामन्त्रात् पाहि कस्याश्चिदभिशस्त्याः स्वाहा' इति। अग्नय इदमिति यजमानः। अयमासन्यहोम उच्यते ॥

२३५. **प्रातरनुवाकादिप्रैषः**—तूष्णीं घृतानुषिक्तं शकलमाहवनीयेऽभ्याधाय तत्रैव तिष्ठन् सम्प्रेष्यति—'प्रातर्याविभ्यो देवेभ्यो होतरनुब्रूहि, ब्रह्मन्वाचं यच्छ, सुब्रह्मण्य सुब्रह्मण्यामाह्वय, अग्नीत्सवनीयान्निर्वह, प्रतिप्रस्थातः खरे पात्राणि युङ्धि' इति। प्रेषिता ऋत्विजो यथासम्प्रैषं कुर्वन्ति। अयं प्रातरनुवाकादिप्रैष उच्यते ॥

२३६. **सौत्यपुरोडाशीयपात्रासादनम्**—पितापुत्रीयायां सुब्रह्मण्यायामाहूतायां आग्नीध्रः ऐन्द्रान् पुरोडाशान् शालामुखीये निर्वपति । तद्यथा पाणी सम्मृश्याग्रेण शालामुखीयं तृणानि संस्तीर्य, तेष्वेकादश पुरोडाशकपालानि द्वे भर्जनकपाले त्रीणि पात्राणि आमिक्षाकुम्भं द्वे मेक्षणे आमिक्षामेक्षणं मन्थनशलाकां शूर्पं कृष्णाजिनं शम्याम् उलूखलं मुसलं दृषदमुपलां पिष्टोद्वपनीं मेक्षणं प्रणीताप्रणयनं पञ्चायतनां दारुपात्रीं प्राकृतया दारुपात्र्या सहान्यानि चत्वारि पात्राणि वा, अजिनपात्रम्, उपवेषं मदन्तीं यानि चान्यान्युपयुक्तानि तानि सर्वाणि द्वन्द्वं सादयति । इदं सौत्यपुरोडाशीयपात्रासादनमुच्यते ।।

२३७. **सवनीयपुरोडाशनिर्वापः**—ततः पवित्रकरणादि । उत्तरवेदिसमीपे प्रणीतासादनम् । ततो ऽग्निहोत्रहवण्यादानादि । निर्वापे विशेष उच्यते—पात्र्यां व्रीहीन् यवाँश्च भेदेन प्रक्षिप्य पूर्वार्धमभिमृशति । द्वयोर्द्रव्ययोर्वीजेक्षणकिशारुनिरसनयोरावृत्तिः । 'देवस्य त्वा स० भ्यामिन्द्राय जुष्टं निर्वपामि' इति मन्त्रे विशेषः । पुरोडाशार्थं चतुरो व्रीहिमुष्टीन्निरूप्य धानार्थं करम्भार्थं च यवमुष्टीन् परिवापार्थं व्रीहिमुष्टीन्निर्वपति । ऐन्द्राण्येव सर्वाणि द्रव्याणि । निरुप्ताभिमर्शनातिशिष्टाभिमर्शनैकीकरणानामावृत्तिः । धान्यद्वित्वात् 'उर्वन्तरिक्षमन्वितम्' 'अदित्या वा मुपस्थे सादयामि' इत्यूहः । अयं सवनीयपुरोडाशनिर्वाप उच्यते ।।

२३८. **सवनीयपुरोडाशादिद्रव्याणां प्रोक्षणादीनि**–'देवस्य त्वा स० भ्यामिन्द्राय यो जुष्टं प्रोक्षामि' इति भेदेनोभयोर्द्रव्ययोः प्रोक्षणम् । ततः कृष्णाजिनादानादि व्रीहीन् द्वेधा कृत्वैकं भागमवहन्ति । इदानीमेव हविष्कृदाह्वानम् । व्रीह्यवघातकाले पृथक् कृतान् व्रीहीन् यवाँश्चोपोद्यच्छन्ते । तन्दुलप्रक्षालननिनयनान्ते, पुनः 'अग्नेस्तनूरसि' इत्यादिना यवानाम् । नात्र हविष्कृतमाह्वयति । परिवापव्रीहीनुपोद्यच्छन्ते । प्रक्षालननिनयनान्ते ।

**सवनीयप्रातर्दोहः**—सायं दोहवत्प्रातर्दोहः । उदगग्रेण शाखापवित्रेण । नात्रातञ्चनादि । अयं सवनीयप्रातर्दोह उच्यते ।

२३९. **धानाकपालोपधानम्**—पुरोडाशीयाधिवपने 'इन्द्राय जुष्टमधिवपामि'इति विशेषः । पुरोडाशार्थमेकादशकपालान्युपधाय तदुत्तरता'आदेवयजं वह' इत्यङ्गारमानीय तदुपरि 'ध्रुवमसि' इत्यादिमन्त्रेण भर्जनकपालमुपदधाति । 'निर्दग्धम्' इत्यादिमन्त्रेण प्रदक्षिणमङ्गारैः परिचिनोति । कपालस्यैकत्वाद् 'यद्घर्मे'इत्यादि मन्त्रे एकवचनान्तत्वम् । इदं धानाकपालोपधानमुच्यते ।

२४०. **परिवापकपालोपधानम्**—तदुत्तरतस्तथैव द्वितीयं भर्जनकपालमुपदधाति। इदं परिवापकपालोपधानमुच्यते।

२४१. **आमिक्षाकुम्भ्युपधानम्**—तदुत्तरतस्तूष्णीमङ्गारमावर्त्य तिरः पवित्रं प्रातर्दोहमामिक्षाकुम्भ्यामानीय तां तूष्णीं तस्मिन्नङ्गारे ऽधिश्रित्य प्रातर्दोहं मेक्षणेनालोड्य श्रपयति। इदमामिक्षाकुम्भ्युपधानमुच्यते।

२४२. **सौत्यपुरोडाशीयसंवापः**—ततः संवपनादि—'इन्द्राय जुष्टꣳ संवपामि' इति ऊहः। पिण्डाभिमर्शने मन्त्रः 'इन्द्राय त्वा' इति। पुरोडाशं प्रथयित्वा यवान् परिक्षुद्य भर्जनकपाले निवपति—'घर्माः स्थ विश्वायुषः' इति मन्त्रेण। एवमेव परिवापव्रीहीन् द्वितीये निवपति। अयं सौत्यपुरोडाशीयसंवाप उच्यते।

२४३. **सवनीयामिक्षावाजिनकरणम्**—तप्ते प्रातर्दोहे सायंदोहं दध्यानीयामीक्षावाजिने शीतले कृत्वा निदधाति। इदं सवनीयामिक्षावाजिनकरणमुच्यते।

२४४. **सवनीयधानाश्रपणम्**—ततः 'त्वचं गृह्णीष्व' इत्यादि। शालामुखीयस्य पश्चात् पुरो वाऽप्येभ्यो निनयति। ततो भ्रष्टान् यवानवतार्य द्विधा कृत्वा एकं भागम् 'इन्द्राय वः' इति मन्त्रेणाभिमृश्य, नवे पात्रे तिरः पवित्रं लौकिकमाज्यमानीय तस्मिन् तं भागमोप्य पुरोडाशादुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। इदं सवनीयधानाश्रपणमुच्यते।

२४५. **करम्भः**—ततः कृष्णाजिनावधूननादि कृत्वा द्वितीयं भागं पेषयित्वा नवे पात्रे तथैवाज्यमानीय जातान् सक्तूनोप्य मन्थनशलाकया रज्वादिना नथित्वा स्थाल्योष्ठलग्ना विप्रुषोन्तः क्षिप्त्वा 'इन्द्राय त्वा' इति मन्त्रेणाभिमृश्य धानानामुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। अयं पदार्थः करम्भ इत्युच्यते।

२४६. **परिवापश्रपणम्**—भृष्टान् व्रीहीनवतार्यं वितुषीकृष्य नवे पात्रे पूर्ववदाज्यमानीयोप्य 'इन्द्राय त्वा' इति मन्त्रेणाभिमृश्य करम्भादुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। इदं परिवापश्रपणमुच्यते।

२४७. तदुत्तरतो भस्ममिश्रेष्वङ्गारेष्वामिक्षावाजिने अधिश्रयति। ततः पवित्रे प्रस्तरे विसृज्य शाखापवित्रं प्रस्तरे प्रज्ञातं विधाय उपवेषं चान्यत्र निदधाति।

**खरे ग्रहादिसादनम्**—प्रतिप्रस्थाता स्रुचा दक्षिणतः पूर्वार्धे खरस्य मध्ये

दक्षिणाशिरसमुपांशु सवनं ग्रावाणं निदधाति। तस्य दक्षिणतः संलग्नमुपांशु पात्रम्। तस्य उत्तरतोन्तर्यामपात्रम्। तस्य पश्चादाश्विनपात्रम्। तस्य पश्चात प्रवाहुवदक्षिणं शुक्रपात्रम्। उत्तरं मन्थिपात्रम्। मन्थिपात्रस्याग्रे दक्षिणोत्तरे ऋतुपात्रे खरस्य पश्चार्धे मध्ये आग्रयणस्थालीम्, तदुपशयपात्रं च। उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनभूम्यां ध्रुवस्थालीम्। पूतभृदाधवनीययोर्मध्ये चमसान् परिप्लुपात्रं च। दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशम्। तस्मिन् दशापवित्रे।

**अतिग्राह्यपात्राणि**--ऐन्द्रवायवस्य दक्षिणत आग्नेयम। तस्य पश्चादैन्द्रम। तस्य पश्चात् सौर्यम्। एतानि त्रीणि पात्राण्यतिग्राह्याणीत्युच्यन्ते।

२४८. ऐन्द्रवायवस्योत्तरतो ऽदाभ्यपात्रम्। तस्य पश्चादंशुपात्रम्। अधस्तादुपरिष्टाद् रजतसुवर्णरुक्मवेष्टितं क्वचिदधिग्रहपात्रम्। एवं पात्राणि सादयति। एतत् (२४७-२४८) खरे ग्रहादिसादनमुच्यते।

२४९. **ग्रहाभिमर्शनम्**– अध्वर्युः 'अग्निर्देवता गायत्री छन्द उपांशोःपात्रमसि' इत्युपांशु पात्रमभिमृशति। सोमो देवता त्रिष्टुप् छन्दोन्तर्यामस्य पात्रमसि' इत्यन्तर्यामम्। 'इन्द्रो देवता जगती छन्द इन्द्रवायवोः पात्रमसि' इत्यैन्द्रवायवपात्रम्। 'बृहस्पतिर्देवता ऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमसि' इति मैत्रावरुणम्। अश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि इत्याश्विनम्। 'सूर्या बृहती छन्दः शुक्रस्य पात्रमसि' इति शुक्रम्। 'चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि' इति मन्थिनम्। 'विश्वेदेवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि' इत्याग्रयणम्। 'इन्द्रो देवता ककुत् छन्द उक्थाना पात्रमसि' इत्युक्थ्यम्। 'पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि' इति ध्रुवस्थालीम्। एतद् ग्रहाभिमर्शनमित्युच्यते।

२५०. **अपोनप्त्रीयारम्भकहोमः**—ततो यत्कर्तव्यं तच्चिन्तयन्नास्ते। होतुः सकाशाद् 'अभूदषा' इति श्रुत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा आहवनीये जुहोत्यन्वारब्धे यजमाने 'शृणोत्वग्निः समिधा धियं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषो नुयज्ञँ शृणोतु देवः सविता हवं मे स्वाहा' इति। अयमपोनप्त्रीयारम्भकहोम उच्यते।

२५१. अग्न्यब्गावदेवसवितृभ्य इदमिति यजमानः।

**अपोनप्त्रीयानुवचनप्रैषः**—अपरं चतुर्गृहीतं गृहीत्वा वहिरादाय सम्प्रैषमाह—अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एतनेष्टः पत्नी-

मुदानयाग्नीद्धोतृचमसेन च मा वसतीवरीभिश्च चात्वाले प्रत्युपलम्बस्व' इति। अयमपोनप्त्रीयानुवचनप्रैष इत्युच्यते।

२५२. **पन्नेजनीग्रहणार्थपत्न्यानयनम्** –यथासम्प्रैषं ते कुर्वन्ति। नेष्टा पन्नेजनीकलशहस्तां पत्नीमानयति 'प्रेह्युदेह्यृतस्य वामीरन्वग्नि स्तेग्रं नयत्वदितिर्मध्यं ददताँरुद्रावसृष्टासि युवानाम मा मा हिँसीः' इति। इदं पन्नेजनीग्रहणार्थपत्न्यानयनमित्युच्यते।

२५३. **एकधनग्रहणार्थहोमः** –प्राग्वंशस्य पूर्वया द्वारोपनिष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तत्र गच्छन्ति। अध्वर्युः अप्सु बर्हिष एकदेशं प्रास्य तस्योपरि सशेषं जुहोति— 'देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मादिन्तमस्तं देवेभ्यो देवत्राधत्त शुक्रँशुक्रपेभ्यो येषां भागस्थ स्वाहा' इति। अद्भ्य इदमिति यजमानः। अयं एकधनग्रहणार्थहोम उच्यते।

२५४. **मैत्रावरुणचमसपूरणम्**—अध्वर्युः अप्सु हुतमाज्यं मैत्रावरुणचमसेनोपप्लावयति—'कार्षिरस्यपापां मृध्रम्' इति। बर्हिषी अन्तर्धाय मैत्रावरुणचमसं पूरयति—'समुद्रस्य वोक्षित्या उन्नये' इति। इदं मैत्रावरुणचमसपूरणमुच्यते॥

२५५. **एकधनग्रहणम्**—त्रिषु कलशेषु बर्हिषी अन्तर्धाय एकधनान् गृह्णाति—'इन्द्राय वो जुष्टान् गृह्णासि' इति। इदमेकधनग्रहणमुच्यते॥

२५६. **एकधना आपः**—इमा गृहीता आपः एकधनपदवाच्याः॥

२५७. **पन्नेजनीग्रहणम्** –प्रतिकलशं ग्रहणमन्त्रस्यावृत्तिः। एकधनान् परिक्रमिभ्य एकधनिभ्यो दत्वा पत्नी कलशं गृहीत्वा बर्हिषी अन्तर्धाय पन्नेजनीर्गृह्णाति—'वसुभ्यो रुद्रेभ्य आदित्येभ्योविश्वेभ्यो देवेभ्यः पन्नेजनीर्गृह्णामि' इति। इदं पन्नेजनीग्रहणमुच्यते॥

२५८. **पन्नेजन्य आपः** -अत्र गृहीता आपः पादप्रक्षालनार्थत्वात् पादयोर्नेजन्य इति समासे पन्नेजनीपदवाच्याः॥

२५९. ततः पन्नेजनीकलशं पत्न्यै प्रदाय यथेतं मङ्गलवाद्यघोषयुक्ताश्चात्वालदेशं प्रतियन्ति। आग्नीध्रः चात्वालदेशे होतृचमसं वसतीवरीश्चासादयति।

**होतृचमसादिषु प्रस्तरणीशेषानयनम्**—अध्वर्युः होतृचमसं वसतीवरीभिः सम्मृश्य पूरयति अन्वारब्धे यजमाने। होतृचमसात् तथैव मैत्रावरुणचमसे

विन्दुं प्रस्कन्दयति । होतृचमसं वसतीवरीमैंत्रावरुणचमसमिति त्रयं संसृष्टं निधाय सकृद्वा प्रत्येकं मन्त्रं वक्ष्यमाणमुक्त्वा क्रमेण होतृचमसादिषु सशेषं प्रचरणीशेषमाज्यमानयति—सं ज्योतिषा ज्योतिरंवताॅं सॅं शुक्राः शुक्रेण सॅं हविषा हविः सं यज्ञपतिराशिषा' इति । इदं होतृचमसादिषु प्रचरणी-शेषानयनमुच्यते ॥

२६०. **वेद्यां पन्नेजनीसादनम्**—पत्नी यथेतमेत्य वेद्यां शालामुखीयस्य पश्चात् तेन संसृष्टाः पन्नेजनीः सादयति । एतद् वेद्यां पन्नेजनीसादनमुच्यते।

२६१. **अवानयननिवेदनम्**—अध्वर्युः होतृचमसं वसतीवरीमैंत्रावरुणचमसं एकधनांश्चादाय होतुः सकाशमेति । 'अवेरपोऽध्वर्या३उ' इति होत्रा पृष्टः सन् प्रत्याह—'उतेमन्नमुरुतेमाः पश्य' इति । इदमवानयननिवेदनमुच्यते ॥

२६२. **ऋतुकरणहोमः**—'यमग्ने पृत्सु मर्त्यं मा वो वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहा' इति प्रचरणीशेषेणाज्येनाहवनीये जुहोति । अग्नय इदमिति यजमानः । अयं ऋतुकरणहोम उच्यते ॥

२६३. **वसतीवर्यादिहविर्धानप्रवेशनम्**—होतृचमसं वसतीवरीमैंत्रावरुण-चमसं च दक्षिणेन होतारं पर्याहृत्य पूर्वया द्वारा हविर्धानं प्रपादयति । तथैव दक्षिणेन होतारं पर्याहृत्याऽपरया द्वारैकधानान् हविर्धानं प्रपादयति । इदं वसतीवर्यादिहविर्धानप्रवेशनमुच्यते ॥

२६४. **हविर्धाने वसतीवर्यादिसादनम्**—होतृचमसीया दक्षिणस्य हविर्धा-नस्यान्तरेणेषे नीत्वा नीडे सादयति । तत्रत्यमाधवनीयमुत्तानं कृत्वा मैत्रा-वरुणचमसीया अपः पर्यस्यति । वसतीवरीणां तृतीयं भागमानयति । तथा तृतीयमेकधनानाम् । अवशिष्टा वसतीवरीरुत्तरस्य हविर्धानस्य पुरोक्षं सादयति । शिष्टानेकधनान् पश्चादक्षं सादयति । इदं हविर्धाने वसतीवर्या-दिसादनमुच्यते ॥

२६५. **दधिग्रहप्रचारः**—ततो हविर्धानयोर्मध्ये उपविश्य दधिग्रहपात्र-मादाय तस्मिन् बर्हिषी अन्तर्धाय तदीयं दधि गृह्णाति—'उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवे-भ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः' । अपोधत्य बर्हिषी ग्रहमादायोत्तिष्ठति 'दिवे त्वाऽन्तरिक्षायत्वा पृथिव्यै त्वा' इति । 'अपेन्द्रद्विषतो मनोपजिज्यास्तो जह्यपयोनोरातीयति तं जहि' इति पूर्वया द्वारोपनिष्क्रामति । पृष्ठ्यायां दक्षिणतः प्राङ्मुख उपविश्याहवनीये जुहोत्य-

न्वारब्धे यजमाने—'प्राणाय त्वा ऽपानाय त्वा व्यानाय त्वा सते त्वा ऽसते ऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वाभूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहा' इति । प्रजापतये इदमिति यजमानः । अध्वर्युः दधिग्रहपात्रसंक्षालनजलमन्तः परिधि निनीय पात्रमग्नावनुप्रहरति । अयं दधिग्रहप्रचार इत्युच्यते ॥

२६६. ततो यजमानः 'अध्वर्यो धेनुं ते ददामि' । अध्वर्युर्धेनु प्रतिगृह्य दधिग्रहशाखां मेक्षणं च तूष्णीमनुप्रहरति । यजमानः प्रकृतिवदुपवेषमुद्वासयति ।

**होतृचमसीयाप्रेक्षणवाचनम्**—अध्वर्युः होतृचमसीया दक्षिणस्य हविर्धानिस्येषयोर्मध्येनावतार्य चर्मणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति—'निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयताऽपानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयताऽऽत्मानं मे तर्पयताऽङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृहान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत मा गणा मे मा वितीतृषन्' इति । इदं होतृचमसीयाप्रेक्षणवाचनमुच्यते ॥

२६७. 'वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसा ऽग्नेः प्रियं पाथ उपेहि' इत्युपनद्धस्य राज्ञस्त्रीनंशूनाकृष्य गृह्णाति । तत्रोक्तमन्त्रेण प्रथमम्, 'रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथि उपेहि' इति द्वितीयपशुम्, 'आदित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि' इति तृतीयम् ।

**आधावमन्त्राः**—अंशूनङ्गुल्यवकाशे कृत्वा होतृचमसीयाः पात्रान्तरे निधाय होतृचमसे आधवनीया ऽपो गृह्णाति । ता अपस्तैरंशुभिर्द्वादशभिर्मन्त्रैराधूनोति—'मान्दासु ते शुक्र शुक्रमाधूनोमि । भन्दनासु ते शुक्र शुक्रमाधूनामि । कोतनासु ते शुक्र शुक्रमाधूनोमि । नूतनासु ते शुक्र शुक्रमाधूनोमि । रेशीषु ते शुक्र शुक्रमाधूनोमि । मेषीषु ते शुक्र शुक्रमाधूनोमि । वाशीषु ते शुक्र शुक्रमाधूनोमि । विश्वभृत्सु ते शुक्र शुक्रमाधूनोमि । माध्वीषु ते शुक्र शुक्रमाधूनोमि । ककुहासु ते शुक्र शुक्रमाधूनोमि । शक्वरीषु ते शुक्र शुक्रमाधूनोमि । शुक्रा सुते शुक्र शुक्रमाधूनोमि । एते मन्त्रा द्वादश आधावसंज्ञकाः ॥

२६८. **अदाभ्यग्रहणम्**—ततः अदाभ्यपात्रमधस्तादुपरिष्टाद्रजतसुवर्णरुक्माभ्यां क्रमेणावेष्टच तस्मिन्नंशून्निधाय होतृचमसीया अपो गृह्णाति—

'शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः। आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत' इति। एतददाभ्यग्रहणमुच्यते ॥

२६९. **अदाभ्यग्रहहोमः**—'ककुहꣳ रूपं वृषभस्य रोचते बृहत्' इति ग्रहमादायोपोत्तिष्ठति। 'सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः' इत्याहवनीयसकाशमेति। वषट्कारपथस्य दक्षिणतः प्राङ्मुखस्तिष्ठन् अन्वारब्धे यजमाने सर्वं जुहोति—'यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा' इति। सोमायेदमिति यजमानः। अध्वर्युः प्रदक्षिणमावृत्य राजन्यंशून् प्रक्षिपति—'उशिक् त्वं देव सोम गायत्रेण छन्दसाऽग्नेः प्रियं पाथो अपीहि' इति प्रथममंशुं प्रक्षिपति। 'वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीहि' इति द्वितीयम्। 'अस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि' इति तृतीयम्। अयमदाभ्यग्रहहोमउच्यते ॥

२७०. ततः पात्रान्तरेऽवनीता होतृचमसीया होतृचमसे आनीय यजमानाय दत्त्वोपांशुसवनं ग्रावाणं 'देवस्य त्वा' इत्यादिमन्त्रेणाऽऽदत्ते। 'ग्रावास्यध्वरकृद् देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिम्' इत्यभिमन्त्रयते।

**प्रातःसवनार्थं सोममानकरणम्**-उपांशुसवनं चर्मणः पूर्वार्धे प्रागायतं निधाय राजानं विस्रस्य उपांशु सवनस्योपरि मिमीते—'इन्द्राय त्वा वृत्रघ्ने। इन्द्राय त्वा वृत्रतुरे। इन्द्राय त्वाऽभिमातिघ्ने। इन्द्राय त्वादित्यवते। इन्द्राय त्वा विश्वदेव्यावते' इत्येकैकेन मन्त्रेण क्रमेण। तत्र प्रथममङ्गुष्ठयुक्तया प्रदेशिन्या, द्वितीयमंगुष्ठयुक्तयोपकनिष्ठिकया, तृतीयं तथैव प्रदेशिन्या, चतुर्थं तथैव कनिष्ठिकया, पञ्चमं तथैव मध्यमा। एवं विमाय पञ्चकृत्वस्तूष्णीं मिमीते। अंगुष्ठयुक्तया प्रथमम्, तथैव मध्यमया द्वितीयम्, तथैव कनिष्ठिकया तृतीयम्, तथैव प्रदेशिन्यां चतुर्थम्, महानाम्न्या तथैव पञ्चमम्। एवं दशकृत्वो मिमानोऽर्धं राजानं मिमीते। इदं प्रातःसवनार्थं सोममानकरणमुच्यते ॥

२७१. **अभिषवार्थसेचनम्**—अवशिष्टं राजानमुष्णीषेण विग्रथ्य ईषयोर्मध्येन नीत्वा नीडे सादयति। मितं राजानं होतृचमसीयाभिः सिञ्चति—'श्वात्राः स्थ वृत्रतुरो राधो गूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳसोमः पिबतु' इति। इदमभिषवार्थसेचनमुच्यते।

२७२. **होतृचमसीयामिश्रणम्**—'तत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधिदात्रेऽवोचः' इति राजानमुदकेन मिश्रयति । इदं होतृचमसीयामिश्रणमुच्यते ।

२७३. **अभिषवार्थफलकाभिमर्शनम्**—'धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्ज्जं मे धत्तं वाँ्हिँ्सिषं मा मा हिँ् सिष्टम्' इति चर्मान्तर्हिते फलके अभिमृशति । इदमभिषवार्थफलकाभिमर्शनमुच्यते ।

२७४. **वृद्धिवाचनम्** ततो यजमानं वाचयति—'अवीवृधं वो मनसा सुजाता ऋतप्रजा ता भग इद्धः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यताँ् सवनाय सोमम्' इति । इदं वृद्धिवाचनमित्युच्यते ।

२७५. प्रतिप्रस्थाता राज्ञः षडंशूनादाय सव्यपाण्यन्तरालेषु द्वौ द्वौ कृत्वा सव्येनैव पाणिनोपांशुपात्रमादत्ते । अध्वर्युः प्रेष्यति—प्रतिप्रस्थातरुदकँ्सेन वोदचमसेन वा जघनेनाहवनीयं प्रत्युपलम्वस्व ।'स तथा करोति ।

**अंशुपात्रहोमः**—अध्वयुः हिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ कृत्वा राजानं विस्रस्योपांशुसवनेन सकृत्प्रहृत्य अंशुपात्रमादाय 'कया न' इति वामदेव्यं साम अनवानं गायन् योनिं[1] वा पठन्नंशुमात्रेण रसं गृह्णाति—'उपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामि' । तिष्ठन्नाहवनीये जुहोति—'प्रजापतये स्वाहा'इति । यथालिङ्गं त्यागो यजमानस्य । हिरण्ये प्राण्यव्यानिति—'आनः प्राण एतु परावत आन्तरिक्षाद् दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा' इति । 'इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥''दधन्देवा' यदीमनु वोचद् ब्रह्माणि वेरु तत् । परिविश्वानि काव्या नेमिश्चक्रमिवाभवत्' इति द्वाभ्यां यजमानः पूर्वाहृताभिरद्भिर्मार्जयते । तच्छतमानं [2]हिरण्यमध्वर्यवे ददाति । शतमानं रजतं ब्रह्मणे । अयमंशुपात्रहोम उच्यते ।

२७६. **अभिषवणम्**—अध्वर्युरुपांशुसवनेनाभिषुणोति । एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त अष्टौ इत्यष्टकृत्वः सङ्ख्याय अभिषुणोति । सोमवल्याः जलेन कुट्टनम् अभिषवणमुच्यते ।

२७७. **उपांशुपात्रे प्रथमरसग्रहणम्**—अंशौ स्कन्ने सति यजमानं वाचयति—'आ मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः ।'

---

१. 'कया नश्चित्र' ऋच्युत्पन्नं साम वामदेव्यमुच्यते । तेनास्य साम्नो योनिभूता ऋगत्र योनिशब्देनोक्ता ।

२. ये हिरण्यं मिमीते तेन शतं मीत्वा ।

अभिषुतं सोममञ्जलिनैकीकृत्य गृह्णाति । प्रतिप्रस्थाताऽङ्गुल्यन्तरालधृताभ्यां प्रथमाभ्यामंशुभ्यामुपांशु पात्रमन्तर्दधाति । अध्वर्युः 'वाचस्पतये पवस्व वाजिन्' इति पात्रे रसमानयति । प्रतिप्रस्थाता अंशू यथास्थानं लग्नयति । इदमुपांशुपात्रे प्रथमरसग्रहणमुच्यते ।

२७८. **द्वितीयरसग्रहणम्**—अध्वर्युः पुनर्होतृचमसीयाऽऽसिञ्चनादि वृद्धिवाचनान्तं कृत्वोपांशुसवनेन एकमित्यादि एकादशेत्यन्तं संख्यायाभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । पूर्ववदञ्जलिनोपहन्ति । प्रतिप्रस्थाता मध्यमाभ्यामंशुभ्यां पात्रमन्तर्दधाति । अध्वर्युः पात्रे आनयति—'वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतः' इति । प्रतिप्रस्थाता अंशू यथास्थानं लग्नयति । इदं द्वितीयरसग्रहणमुच्यते ॥

२७९. **तृतीयरसग्रहणम्**—द्वितीयवत् तृतीयं द्वादशकृत्वः संख्यायाऽभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । उत्तमाभ्यामंशुभ्यामन्तर्धानम् । 'देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा' इति पात्रे रसानयनम् । इदं तृतीयरसग्रहणमुच्यते ।

२८०. **ग्रहावेक्षणम्**--अध्वर्युः उपांशुसवनं दशापवित्रेण परिमृज्य यथास्थानं निदधाति । उपांशुप्रभृतीनां सर्वेषां ग्रहाणां ग्रहणं पुरस्तादुपरिष्टाच्चोद्बुध्नता आविलात् । ग्रहाणाम् 'उपयाम' इत्येतद्घटितेन मन्त्रेण ग्रहणम् । अनादिष्टश्रपणानां हिरण्येन श्रपणम् । दधिग्रहभिन्नानां तिष्ठद्धोमः । अध्वर्युः 'स्वांकृतोसि' इति मन्त्रेण प्रतिप्रस्थातुः सकाशात् उपांशु पात्रममादते । 'मधुमतीर्नं इषस्कृधि' इत्यवेक्षते पात्रम् । इदं ग्रहावेक्षणमुच्यते ।

२८१, **ग्रहोन्मार्जनम्**—सव्येन धृत्वा दक्षिणेनोर्ध्वमुन्मार्ष्टि—'विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः' इति । इदं ग्रहोन्मार्जनमुच्यते ।

२८२. **उपांशुपात्रहोमः**—'मनस्त्वाष्टु' इत्युपोत्तिष्ठति । 'उर्वन्तरिक्षमन्विहि' इत्याहवनीयसमीपं गच्छति । 'स्वाहा त्वा सुभवः सूर्याय स्वाहा' इत्यन्वारब्धे यजमाने आहवनीये जुहोति । सूर्यायेदमिति यजमानः । अयमुपांशुपात्रहोम उच्यते ।

२८३. **ग्रहरसावमार्जनम्**—अनुप्राण्य यजमानं वाचयति—'भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि' इति । बिलादारभ्याधः प्रदेशादवाचीनं ग्रहस्य बहिष्ठं रसमवमृज्य प्रत्यगग्रेणाधोमुखेन पाणिना मध्यमे परिधौ निमार्ष्टि—

'देवेभ्यस्त्वा मरीचिपेभ्यः' इति । देवेभ्यो मरीचिपेभ्य इदमिति यजमानः । इदं ग्रहरसावमार्जनमुच्यते ।

२८४. **उपांशुसवनं प्रत्यभिमर्शनम्**—अध्वर्युः प्रदक्षिणमावृत्याऽऽग्रयणस्थाल्यां ग्रहस्य संस्रावमवनयति—'एष ते योनिः' इति । उपांशुपात्रे राज्ञोंशु प्रास्य यथास्थानं निदधाति—'प्राणाय त्वा' इति । इदमुपांशुसवनं प्रत्यभिमर्शनमुच्यते ।

२८५. प्रतिप्रस्थाता ग्रहणक्रमेणाभिषुते राज्ञि द्वौ द्वावंशू प्रक्षिपति—'यत्ते सोमादाभ्यं नाम जागृषि तस्मै ते सोम सोमाय' इति मन्त्रस्य त्रिरावृत्तिः ।

**अभिषवार्थोपवेशनम्**—अध्वर्युः राज्ञः पश्चात प्राङ्मुख उपविशति । तस्य दक्षिणत उदङ्मुखो यजमानः । प्रतिस्थाता च उत्तरतो दक्षिणामुखः । आग्नीध्रः पुरस्तात् प्रत्यङ्मुखः । नेष्टा दक्षिणत उदङ्मुखः । ब्रह्मा अभिषोतॄन् परीत्य दक्षिणत उदङ्मुख आस्ते । इदमभिषवार्थोपवेशनमुच्यते ।

२८६. **अंशुपरिप्लावनम्**—ततो ऽध्वर्युरुन्नेतारमाह—'आहरोपसृज' इति । उन्नेता आधवनीयादुदञ्चनेन होतृचमसमुपर्यर्धं करोति । अध्वर्युप्रतिस्थात्रग्नीन्नेष्टारो होतृचमसे राज्ञोंशून् परिप्लावयन्ति 'प्रागपागुदगधराक्तास्त्वादिश आधावन्त्वम्ब निष्वर' इति । इदमंशुपरिप्लावनमुच्यते ।

२८७. **सोमाभिषवप्रथमपर्यायः**—होतृचमसादंशूनादाय चर्मणि निधाय राजानं होतृचमसोदकेनोपसिच्य प्रत्यात्मानं सर्वे विभज्य अंशूनाकृष्य यावद् रसनिस्रावमभिषुण्वन्ति । आहरोपसृजेत्याद्ये तदन्तं त्रिवारं समन्त्रकं कृत्वा चतुर्थे आहरोपसृजेति प्रैषमात्रम्, अन्यत् तूष्णीम् । ततो राजानं हस्तेन निष्पीड्य सम्भरणीयकलशे रसं गृहीत्वा अध्वर्युरन्तरेणेषे उन्नेत्रे प्रयच्छति । उन्नेता आधवनीयस्था अपो ऽन्यस्मिन्नम्भ्रणे ऽवनीयाऽऽधवनीये पवित्रं वितत्य सम्भरणीमवनयति । एष एकः पर्यायः । अयं सोमाभिषवप्रथमपर्याय उच्यते ।।

२८८. **सोमाभिषवद्वितीयपर्यायः**—तत आहरोपसृजेत्यादि त्रिवारं समन्त्रकं सकृत्तूष्णीं च कृत्वा अम्भ्रणान्तरस्था आधवनीया अप उपसृजति सम्भरणीमवनयतित्यन्तं करोति । एष सोमाभिषवद्वितीयपर्याय उच्यते ।।

२८९. **सोमाभिषवतृतीयपर्यायः**—एवमेव तृतीयः पर्यायः । तृतीये अम्भ्रणे आधवनीयापोऽवनयतीति विशेषः । एष सोमाभिषवतृतीयपर्याय उच्यते ।।

२९०. **अभिषुतसोमनिवेदनम्**—ततः ऋजीषं दशापवित्रेण परिवेष्टच अन्तरेणेषे उन्नेत्रे प्रयच्छति । उन्नेता मर्दयित्वा आधवनीये निष्पीडच तेनैव मार्गेणाध्वर्युः ऋजीषं चर्मणि निधाय पूर्ववत् सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखेषु ऋजीषं चतुर्धा कृत्वा व्यपोहति । उद्गातृभ्यः प्राह—'सोमो ऽभिषुतः' इति । इदमभिषुतसोमनिवेदनमुच्यते ।।

२९१. **अन्तर्यामरसग्रहणम्**—उद्गातृभिर्द्रोणकलशे ऋजीषस्योपरि निहिते दशापवित्रे वितते उदिते आदित्ये ऽनुदिते वा उन्नेत्रा आधवनीयादुदञ्चनेन दशापवित्रे ऽवनीयमानं सोममन्तर्यामपात्रेणाधोधारायां गृह्णाति—'उपयामगृहीतोस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षँ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व' इति । इदमन्तर्यामरसग्रहणमुच्यते ।

२९२. **अन्तर्यामपात्रहोमः**—'स्वां कृतोसि' इति धारातो ग्रहमपयच्छति । 'मधुमतीः' इत्यादिमन्त्रेणेक्षते । उपांशुपात्रवन्मन्त्रेणोन्मार्ष्टि । तथैवादायोपोत्थायाऽऽहवनीयसमीपमेत्योपांशुपात्रहोममन्त्रेण जुहोति । अपान्य यजमानं वाचयति – 'धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि' इति । अयमन्तर्यामपात्रहोम उच्यते ।

२९३. ग्रहस्य बहिष्ठं रसं मूलादारभ्य विलपर्यन्तं दक्षिणेन पाणिनोर्ध्वमुन्मुच्य प्राचोत्तानेन पाणिना मध्यमे परिधौ उक्तमन्त्रेणोन्मार्ष्टि । ग्रहस्य यथास्थानसादनान्तं प्रत्यभिमर्शनान्तं च समन्त्रकमुपांशुपात्रवत् ।

**ग्रहेषु रसायनप्रैषः**—तत उन्नेतारमाह—अप्रमत्तः सन्ततमानयोपाँशुग्रहान् ग्रहीष्यामि' इति । अयं ग्रहेषु रसानयनप्रैष उच्यते ।

२९४. **ऐन्द्रवायवपात्रे रसग्रहणम्**—उन्नेता पूर्ववदाधवनीयादुदञ्चनेन सन्ततां सोमधारां दशापवित्रे ऽवनयति । ध्रुवस्थाल्यां ग्रहणपर्यन्तं अध्वर्युः ऐन्द्रवायवपात्रेण धारायां गृह्णाति । एतदादीनाग्रयणान्तान् मन्द्रापेक्षया नीचस्वरेण गृह्णाति । 'आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो०पेयम् । उपयामगृहीतो ऽसि वायवे त्वा जुष्टं गृहणामि'—इति किञ्चित् गृहीत्वा धारातो ग्रहमपनीय पुनर्गृह्णाति—'इन्द्रवायू इमे सुता उप प्रयोभिरागतमिन्दवो वामुशन्ति हि । उपयामगृहीतोसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि ।' दशापवित्रेण परिमृज्य मन्त्रेण यथास्थानं निदधाति । 'एष ते योनिः सजोषाभ्यां त्वा' इत्यैन्द्रवायवपात्रे रसग्रहणमुच्यते ।

२९५. **मैत्रावरुणपात्रे रसग्रहणम्** –मैत्रावरुणपात्रे गृह्णाति—'अयं वां मित्रावरुणा०श्रुतँ हवम्। उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि' इति। बर्हिषी अन्तर्धाय पयसा श्रीत्वा अपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य यथास्थानं सादयति 'एष ते योनिर्ऋतायुभ्यां त्वा' इति। इदं मैत्रावरुणपात्रे रसग्रहणमुच्यते।

२९६. **शुक्रपात्रे रसग्रहणम्**—शुक्रपात्रेण गृह्णाति—'अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति। उपयाम गृहीतोऽसि शण्डाय त्वा जुष्टं गृह्णामि।'परिमृज्य सादयति—'एष ते योनिर्वीर तां पाहि' इति। इदं शुक्रपात्रे रसग्रहणमुच्यते।

२९७. **मन्थिपात्रे रसग्रहणम्**—मन्थिपात्रे गृह्णाति—'तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदँ सुवर्विदम्। ०रोचनम्। उपयामगृहीतो ऽसि मर्काय त्वा जुष्टं गृह्णामि' इति। बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वा ऽपोद्धृत्य बर्हिषी परिमृज्य सादयति। इदं मन्थिपात्रे सोमग्रहणमुच्यने।

२९८. **आग्रयणस्थाल्यां सोग्रहणम्** –आग्रयणस्थं सोमं पात्रान्तरे ऽवनीय तेनोदञ्चनेन च द्वयोर्धारयोरधस्तादाग्रयणं गृह्णाति–'ये देवा सो०मञ्जुषध्वम्। उपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि' इति। ततो मन्द्रेण 'हिं हिं हिं सोमः पवते सोमः पवते ऽस्मै ब्रह्मणे पवते ऽस्मै क्षत्राय पवते ऽस्यै विशे पवत इषे पवत ऊर्जे पवते ऽद्भ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ऽस्मै सुन्वते यजमानाय पवते ज्यैष्ठ्याय पवते।' अविच्छिद्योपरिमन्त्रं वदति—आग्रयणो ऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विश्वं त्वं पाहीन्द्रियेण' इति परिमृज्य सादयति—'एष ते योनिर्विश्वेभ्यस्त्वाः देवेभ्यः' इति। इदमाग्रयणस्थाल्यां सोमग्रहणमुच्यते।

२९९. एतदन्तान् उपांशु गृहीत्वा ऽत ऊर्ध्वं सवनस्वरेण गृह्णाति—

**आग्नेयपात्रेसोमग्रहणम्**——आग्नेयपात्रेण गृह्णाति—'अग्न आयूँषि० दुच्छुनाम्। उपयामगृहीतोस्यग्नये त्वा ज्योतिष्मते। जुष्टं गृह्णामि। परिमृज्य सादयति—एष ते योनिरग्नये त्वा तेजस्वते' इति। इदमाग्नेयपात्रे सोमग्रहणमुच्यते।

---

१. प्रातःसवने मन्द्रस्वरो विहित. माध्यन्दिनसवने मध्यमः स्वरः, तृतीय-सवने च क्रुष्टस्वर, (द्र० आप० परिभाषा १।११-१६)॥

३००. **ऐन्द्रपात्रे सोमग्रहणम्**—ऐन्द्रपात्रेण गृह्णाति—'उत्तिष्ठन्नोज०चमू सतम्। उदयामगृहीतोऽसीन्द्राय त्वौजस्वते जुष्टं गृह्णामि' इति। परिमृज्य सादयति - 'एष ते योनिरिन्द्रायत्वौजस्वते' इति। इदमैन्द्रपात्रे स.मग्रहण-मुच्यते।

३०१. **सौर्यपात्रे सोमग्रहणम्**—सौर्यपात्रेण गृह्णाति-तरणिर्वि०रोचनम्। उपमामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामि। परिमृज्य सादयति—एष ते योनिः सूर्याय त्वा भ्राजस्वते' इति। इदं सौर्यपात्रे सोमग्रहण-मुच्यते।

३०२. **उक्थ्यस्थाल्यां सोमग्रहणम्**—तत उक्थ्यस्थाल्याम्—'उपयामगृहो-तोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामि' इति। परि०यति—'एष ते योनिरिन्द्राय त्वोक्थायुवे' इति। इदमुक्थ्यस्थाल्यां सोमग्रहणमुच्यते।

३०३. **ध्रुवस्थालीसोमग्रहणम्**—ततो ध्रुवस्थालीं गृहीत्वा ऽऽह—'ये पूर्वया द्वारा प्रापत्स्यन्तः प्राञ्चस्ते निष्क्रामन्तु ये परया प्रत्यञ्चस्ते मा वो ऽभिपरिहारिषम्।' ध्रुवस्थालीं सोन्नेतृकानभिषोतृंश्च जघनेनाभिपरिहृत्यो-त्तरतो धारायां गृह्णाति—'मूर्धानं दिवो०यन्त देवाः। उपयामगृहीतोस्य-ग्नये त्वा वैश्वानराय जुष्टं गृह्णामि' इति उपर्यविच्छिद्य मन्त्रं वदति—'ध्रुवो ऽसि ध्रुवक्षितिध्रुवाणां ध्रुवतमोच्युतानामच्युतक्षित्तमः' इति। ततः परि-मृज्य यथाहृतं परिहृत्य यथास्थानं सादयति—'एष ते योनिरग्नये त्वा वैश्व-नराय' इति। इदं ध्रुवस्थालीसोमग्रहणमुच्यते।

३०४. **सोमद्रप्सस्कन्दनानुमन्त्रणम्**—तत उन्नेता आधवनीयादुदञ्च-नेनोपर्यर्धं द्रोणकलशं पूरयति। अध्वर्युस्तस्मिन् पयः सक्तून् हिरण्यं च प्रक्षिप्य मिश्रीकृत्य परिप्लुपात्रं च प्रास्य द्रप्साननुमन्त्रयते—'द्रप्सश्चस्कन्द० सप्त-होत्राः। यस्ते द्रप्सः स्कन्दति०तं जुहोमि। यो द्रप्सो अꣳशु ०तं जुहोमि' यस्ते द्रप्सो म० तं जुहोमि इति चतसृभिः। इदं सोमद्रप्सस्कन्दनानुमन्त्रण-मुच्यते।

३०५. **पूतभृत्पूरणप्रैषः**—उन्नेतारमाह—अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् ग्रहीष्यामि। अयं पूतभृत्पूरणप्रैष उच्यते।

३०६. उन्नेता पूतभृतो बिले दशापवित्रं वितत्याधवनीयात् द्वौ त्रीन् वोदञ्चनानयति।

**द्रोणकलश-आधवनीय-पूतभृदभिमर्शनम्**—अध्वर्युः द्रोणकलशमभिमृ-

शति—'उपयामगृहीतोऽसि प्रजापतये त्वा।' तत आधवनीयम्—'उप०सीन्द्राय त्वा।' पूतभृतम्—'उप०सिविश्वेभ्यस्त्वा देवेभ्यः।'

**आधवनीयन्युब्जकरणप्रैषः**—उन्नेतारमाह—उन्नेतः प्रांचँ राजानं पूतभृतिमभिसंपवयताद् दशाभिराधवनीयं मृष्ट्वा न्युब्जतात्। अयमाधवनीयन्युब्जकरणप्रैष उच्यते॥

३०७. **बहिष्पवमानारम्भकहोमः**—उन्नेता अवकाशचरणानन्तरं तथा करोति। अध्वर्युः अप उपस्पृश्योपस्तंभनबर्हिर्मुष्टेर्बर्हिर्द्वयमादायोपनिःसर्पति। तं निःसर्पन्तमन्वारभत उद्गाता, उद्गातारं प्रस्तोता, तं प्रतिहर्ता, तं यजमानः, तं ब्रह्मा, तं प्रतिप्रस्थाता मैत्रावरुणो वा। एवमन्वारब्धेषु अध्वर्युराहवनीये स्रुवाहुतिं जुहोति—'अग्निः प्रातः सवने०मक्षाः स्याम स्वाहा' इति। एतयैवर्चा प्रतिप्रस्थाता। यथावेदमितरे। आश्वलायनयजमानस्य 'द्रप्सश्चस्कन्द, यस्ते द्रप्स' इति द्वाभ्यां होमः। स चान्वारम्भक्रमेण। अयं वहिष्पवमानारम्भकहोम उच्यते॥

३०८. **बहिष्पवमानस्तोत्रोपाकरणम्**—अध्वर्युर्बर्हिषी धून्वानो वहिष्पवमानायोदगास्तावं प्रतिसर्पति—वागग्रेगा०यजमाने च' इति। आस्तावे यथाऽऽयतनमुपविश्य प्रस्तोत्रे वर्हिषी प्रयच्छति—'ऋक्साम०प्रजात्यै' इति। जपति—'वायुर्हिङ्कर्ता० बृहस्पतिः धत्वोंस्तुध्वम्' इति। इदं वहिष्पवमानस्तोत्रोपाकरणमुच्यते॥

३०९. **बहिष्पवमानारम्भकवाचनम्**—वहिष्पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति—'श्येनोऽसि०संपारय' इति। इदं वहिष्पवमानारम्भकवाचनम्॥

३१०. **स्तोत्रानन्तरवाचनम्**—दशहोतारं व्याख्याय समाप्ते साम्नि यजमानं वाचयति—'स्तुतस्य०रयीणाम्' इति। एवं सर्वस्तोत्रेषु। इदं स्तोत्रानन्तरवाचनम्।

३११. **अग्निविहरणादिप्रैषः**—'अग्नीदग्नीन् विहर, बर्हिः स्तृणाहि, पुरोडाशान् अलङ्कुरु, प्रतिप्रस्थातः पशुरन्तिकेऽस्तु' इति। अयमग्निविहरणादिप्रैषः॥

३१२. **सर्वपात्रस्थसोमोपस्थानम्**—अप उपस्पृश्य। 'एहि यजमान' इत्यामन्त्र्य यजमानेन सह पूर्वया द्वारा हविर्धानं प्रविश्य 'विष्णो त्वं नो०-अक्षि' इति। इदं सर्वपात्रस्थसोमोपस्थानम्॥

३१३. **आश्विनपात्रे सोमग्रहणम्**—आश्विनपात्रमादाय द्रोणकलशात्

परिप्लुपात्रेण गृह्णाति—'यावांकशा०क्षतम्'। उप०स्यश्विभ्यां त्वा०मि। परि०यति—'एष ते योनिर्माध्वीभ्यां त्वा' इदमाश्विनपात्रे सोमग्रहणम् ॥

३१४. अप०स्पृश्य। एहि त०त्र्य। आहवनीयसमीपं गत्वा प्रचरण्यां स्रुचि चतुर्गृहीतं गृहीत्वा यजमाने ऽन्वारब्धे सप्तहोतारं समनाद्रुत्याहवनीये जुहोति। यजमानो ऽध्वर्युश्च सर्वपात्रस्थं सोममुपतिष्ठते—'परिभूरग्नि० मुन्मृजे'।

**सर्वपात्रस्थसोमानां प्रत्येकमुपस्थानम्**—उपांशुपात्रम्—'प्राणाय मे०- पवस्व'। उपांशुसवनम्—'व्याना०वस्व'। ऐन्द्रवायवम्—'वाचे मे०स्व'। मैत्रावरुणम्—'दक्षक्रतुभ्यां मे०स्व'। आश्विनम्—'श्रोत्राय मे०स्व'। युगपच्छुक्रामन्थिनौ—'चक्षुर्भ्यां मे०स्व'। आग्रयणम्—'आत्मने मे०स्व'। अतिग्राह्यान् क्रमेण—'वीर्याय मे०स्व'। मन्त्रावृत्तिः। उक्थ्यम्—अङ्गेभ्यो मे०-स्व। ध्रुवम्—आयुषे मे०स्व। द्रोणकलशम्—विष्णोर्जठरमसि वर्चो०स्व। आधवनीयम्—इन्द्रस्य जठरमसि वर्चो०स्व। पूतभृतम्—विश्वेषां देवानां जठर०स्व। सर्वपात्रस्थम्—'को ऽसि को नाम०मुन्मृजे'। इदं सर्वपात्रस्थ-सोमानां प्रत्येकमुपस्थानम् ॥

३१५. **आधवनीयस्य हविर्धाननीडे सादनम्**—उन्नेता पूतभृति दशापवित्रं वितत्याधवनीयस्थं सोमं तस्मिन्नवनीय दशापवित्रेणाधवनीयं मृष्ट्वोत्तरस्य हविर्धानस्य नीडे ऽधोबिलं सादयति। इदमाधवनीयस्य हविर्धाननीडे सादनम् ॥

३१६. **धिष्ण्येष्वङ्गारविहरणम्**—अध्वर्युः प्रचरण्यां नव कृत्व आज्यं गृह्णाति। आग्नीध्रः आग्नीध्रीयादङ्गारानादायाग्नीध्रीये होत्रीये चैकं विहृत्य स्वरं बहिर्गच्छन् यूपाहवनीययोर्मध्येन नीत्वा प्रशास्त्रीये विहृत्य यथेतमेत्य ब्राह्मणाच्छंसीये पोत्रीये नेष्ट्रीये ऽच्छावाकीये च विहृत्य पुनस्तथैव गत्वा मार्जालीये विहृत्य यथेतमेत्याग्नीध्रीये ऽतिशिष्टान् विहरति। इदं धिष्ण्येष्वङ्गारविहरणम् ॥

३१७. **धिष्ण्याधारणम्**—अध्वर्युः पुरस्तात् प्रत्यङ्मुख उपविश्य विहृतान् धिष्ण्यान् न्युप्तमिवाऽऽघारयति—'विभरसि०सीः स्वाहा' इत्याग्नीध्रीये। वह्निरसि०हा' प्रशास्त्रीयम्। 'तुथो०हा' इति ब्राह्मणाच्छंसीयम्। 'उशि० स्वाहा' पोत्रीयम्। 'अङ्घा०हा' नेष्ट्रीयम्। 'अवस्यु० हा' अच्छावाकीयम्। शुन्ध्यू०हा' मार्जालीयम्। 'सप्त त' इत्यृचा पुनराग्नीध्रीये जुहोति। उत्तरस्य हविर्धानस्य चुबुके प्रचरणीं सादयति। इदं धिष्ण्याधारणम् ॥

३१८. **सवनीयपृष्ठ्यास्तरणम्**—आग्नीध्रः शालामुखीयादाहवनीयपर्यन्तं प्राकृतमन्त्रेण पृष्ठ्याँस्तृणाति । इदं सवनीयपृष्ठ्यास्तरणम् ।।

३१९. **सवनीयाङ्गमैत्रावरुणादिप्रवरणम्** – अध्वर्युः यूपरशनामादाय यूपसमीपमागत्य स्वरुं गृहीत्वा पूर्वां रशनामुदूह्य परिव्ययणादि प्रवरान्तमग्नीषोमीयवत् करोति । तत्र विशेषः मन्त्रेषु देवतास्थाने **अग्नि**शब्द ऊह्यः । होतृप्रवरान्तरम् अश्विनाऽध्वर्यू आध्वर्यवात् । 'अहं चामुकशर्मा मानुषौ' इति प्रतिप्रस्थातुर्नाम गृह्णाति । होत्रा हुते सकृद्गृहीतेन प्रवृताहुतीर्जुहोति—'जुष्टो वाचो०त्यै स्वाहा' । 'ऋचास्तो० नि स्वाहा ।' 'सूर्यो मा०ते स्वाहा' । एवं प्रतिप्रस्थाता । अध्वर्युः पुनरुत्करं गत्वा मित्रावरुणौ प्रशास्तारौ प्रशास्तात् । अमुकशर्मा मानुष इति मैत्रावरुणस्य नाम गृह्णाति । इन्द्रो ब्रह्मा ब्राह्मणात् । पूर्ववद् ब्राह्मणाच्छंसिनो नाम गृह्णाति । मरुतः पोत्रात् इति पोतुः। ग्रावो नेष्टात् नेष्टुः । अग्नीमाग्नीध्रात् इत्यग्नीधः । सर्वप्रवरात् पूर्वमाश्रावणप्रत्याश्रावणे भवतः । तत आश्राव्य प्रत्याश्राविते 'अग्निर्हं दैवीनां विशां पुर एता यां सुन्वन्यजमानो मनुष्याणां तपोरस्थरिगार्हपत्यं दीदयच्छतँ हिमाद्वायूराधाँसीत् संपृञ्चानावपृञ्चानौ तन्वः' इत्याह । इदं सवनीयाङ्गमैत्रावरुणादिप्रवरणम् ।।

३२०. **सवनीयपशुवपाप्रचारः**—आश्वलायनो यजमानः स्रुवेण प्रवृताहुतीर्जुहोति । अग्नीषोमीयवत् सवनीयपशुवपाप्रचार ऊहेन । अयं सवनीयपशुवपाप्रचारः ।।

३२१. **सवनीयेन सह पशुपुरोडाशनिर्वापः**—पशुपुरोडाशनिर्वापप्रैषानन्तरं आग्नीध्रो माध्यन्दिनीयैः सवनीयैः सह निर्वपति । अयं सवनीयैः सह पशुपुरोडाशनिर्वापः ।।

३२२. **यजमानस्य सदस्युपवेशनम्**—कुम्भ्यावदाननिक्षेपानन्तरं उत्करे स्फ्यादीन् विघनान् निधाय यजमानमुपस्थापयति—'स्फ्यः स्वस्ति० ह्वयन्ताम्' इति । यजमान आहवनीयमुपतिष्ठते—'नमो ऽग्नये म०र्यात्' । 'नेनोरु०पाहि' इत्याग्नीध्रीयम् । सदसः पूर्वद्वारि प्रत्यङ्मुखस्तिष्ठन् होत्रीयम्—'नम इन्द्रा०र्वधीः' इति । सव्यमावृत्य प्राङ्मुखो जपति—'दृढे स्थःशि०ष्येभ्यः' इति । प्रदक्षिणमावृत्य सदसः पूर्वे द्वार्बाहू युगपदभिमृशति—'देवी०प्तम्' इति । सदः प्रविशति—'नमः सद० थिव्यै' इति । मैत्रावरुणधिष्ण्यस्य दक्षिणतः स्वायतनाद्बहिः सदसस्तृणं नैर्ऋत्यान्दिशि निरस्यति—'अहे०तरः' इति । अप०स्पृश्योदङ्मुख उपविशति—'उन्नी०गेषम्' इति । पृथिवीं दृष्ट्वा द्यामी-

क्षते—'पातं० ह्नः' इति । प्राचीनवीती दक्षिणार्धमीक्षते—'आगं०यास्त' इति । अप उपस्पृश्य तूष्णीमुत्तरार्धं परेक्षते । इदं यजमानस्य सदस्युपवेशनम् ॥

३२३. अध्वर्युप्रतिप्रस्थातारौ आहवनीयोपस्थानाद्येतदन्तं कुरुतः ।

**सदसि प्रसर्पणम्** —अध्वर्युर्दक्षिणद्वार्बाहुमूले प्रत्यङ्मुख उपविशति, उत्तरे प्रतिप्रस्थाता । इदं सदसि प्रसर्पणम् ॥

३२४. **खरे सवनीयासादनम्**—एवं सम्प्रसृप्तेषु आग्नीध्रः पञ्चायतनायां पात्र्यां मध्ये पुरोडाशं पूर्वस्यां धाना दक्षिणतः करम्भं पश्चात् परिवापं उत्तरत आमिक्षा प्रकृतिवद् यथार्थोहसहितैर्मन्त्रैरुपस्तरणादि कृत्वोद्वास्य कपालोद्वासनान्तं कृत्वा हवींषि परिगृह्य पूर्वद्वारा निष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं चाहृत्य पूर्वद्वारा हविर्धानं प्रपाद्य स्रुचां पश्चात् खरे सादयति । उत्करे विशये वा वाजिनम् । इदं खरे सवनीयासादनम् ॥

३२५. **ब्रह्मयजमानाग्नीध्राणामुपवेशनम्**——ऐष्टिकपाशुकानुष्ठानकाले ब्रह्मयजमानावाहवनीयस्य दक्षिणत उपविशतः, तथा द्विदैवत्यप्रचारे । सौमिके तु सदसि पूर्वो यजमानो ऽपरो ब्रह्मा । आग्नीध्र उत्करे । सौमिके त्वाग्नीध्रीये ।

**प्रातःसवनीयप्रचारः**—अध्वर्युर्जुहूपभृतोरुपस्तृणान आह—'प्रातः सावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रू३हि' इति । अवदानादिप्रत्यञ्जनान्तं कृत्वा जुहूपभृतावादाय पृष्ठ्याया दक्षिणतः प्राङ्मुखस्तिष्ठन्नाह—'प्रातःप्रातःसावस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रे३ष्य' इति । आमिक्षायास्तूष्णीमिडायामवदानम् । अयं प्रातःसवनीयप्रचारः ॥

३२६. **ऐन्द्रवायवे सोमग्रहणम्**—होतृसकाशे इडां स्थापयित्वा प्राङायन्नाह—'वायव इन्द्रवायुभ्यामनुब्रू३हि' इति । प्रतिप्रस्थाता आदित्यस्थाल्या औपशयं पात्रमादाय तस्मिन् द्रोणकलशात् परिप्लुपात्रेण गृह्णाति । उप० क्षाभ्यां गृह्णामि' इति । इदमैन्द्रवायवे सोमग्रहणम् ॥

३२७. **ऐन्द्रवायवग्रहप्रचारः**—सव्येन प्रतिनिर्ग्राह्यं दक्षिणेनैन्द्रवायवमादाय निष्क्रामति । अध्वर्युस्तथैव प्रतिप्रस्थातुर्ग्रहावादाया ऽपरेण परिक्रम्य पृष्ठ्याया उत्तरतः प्राङ्मुखाय तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छति । सव्येन ग्रहं धृत्वा दक्षिणेनाज्यस्थाल्याः स्रुवेणोपहृत्य प्राञ्चं तिर्यञ्चं वा आघारयति—'अध्वरो यज्ञो०सोम स्वाहा' इति । अत्याक्रम्य 'वायव

इन्द्रवायुभ्यां प्रे३ष्य' इति । वषट्कृते जुहोति । द्वितीयवषट्कारे ऽध्वर्युप्रतिप्रस्थातारौ जुहुतः । अध्वर्युर्यजमानं वाचयति—'यो न०श्चेतयानि' इति । प्रतिप्रस्थाता प्रतिनिर्ग्राह्य—संस्रावमध्वर्युपात्रे ऽवनयति । अध्वर्युः उभयोरर्धं प्रतिप्रस्थातुः पात्रे । प्रतिप्रस्थाता प्रत्यगावृत्या ऽध्वर्योर्दक्षिणेन पात्रमाहृत्य स्वयमुत्तरेण हविर्धानं प्रविश्य तदादित्यस्थाल्यामवनयति—'देवेभ्यस्त्वा' इति । अयमैन्द्रवायवग्रहप्रचारः ॥

३२८. **मैत्रावरुणप्रचारः**———आज्यपुरोडाशपश्वाऽऽमिक्षाचमसाहुतयो मध्ये । अभितो ग्रहाहुतयो धारया पात्रमुखेन सर्वत्र । अध्वर्युः प्रदक्षिणमावृत्य हविर्धानं प्रविश्य प्रतिप्रस्थातुर्दक्षिणेन पात्रं हृत्वा स्वयमुत्तरतो गत्वा होत्रे पात्रं प्रदाय प्राङायन्नाह—'मित्रावरुणाभ्यामनुब्रू३हि' इति । प्रतिप्रस्थाता तथैव मैत्रावरुणस्य प्रतिनिर्ग्राह्यं गृह्णाति—'उपया० स्पृत० मि' । ऐन्द्रवायववदादाय निष्क्रामति । पूर्ववत् प्रतिनिर्ग्राह्यं प्रदायाऽऽश्राव्याऽऽह—'मित्रावरुणाभ्यां प्रे३ष्य' इति । वषट्कृते सहोभौ जुहुतः । यजमानं वाचयति—'नमो मित्रा० यानि' इति । प्रतिप्रस्थाता संस्रावं पूर्ववदवनयति । अध्वर्युः उभयोरर्धं प्रतिप्रस्थातुः पात्रे । स तदादित्यस्थाल्यामवनयति—'विश्वदेवेभ्यस्त्वा' इति । अयं मैत्रावरुणप्रचारः ॥

३२९. **आश्विनप्रचारः**-अध्वर्युः होत्रे पात्रं प्रदाय प्राङायन्नाह—'अश्विभ्यामनुब्रू३हि' इति । उभौ सह जुह्वतः । यजमानं वाचयति—'यो नोऽश्विना०यानि' इति । प्रतिप्रस्थाता पूर्ववत् संस्रावमवनयति । तस्य पात्रे ऽध्वर्युस्तदर्धं पूर्ववत् । स तदादित्यस्थाल्याम्—'विश्वेभ्यस्त्वादेवेभ्यः' इति । अयमाश्विनप्रचारः ॥

३३०. **द्विदैवत्यप्रचारः**—द्रोणकलशादादित्यस्थालीमुपर्यर्धां कृत्वोपशयपात्रेणाऽपिदधाति—'विष्णु०रुयत्' इति द्विदैवत्यप्रचारः ॥

३३१, **चमसोन्नयनम्**—अध्वर्युः पूर्ववद्धोत्रे पात्रं प्रदाय प्राङायन्नाह—'उन्नीयमानेभ्यो ऽनुब्रू३हि, होतुश्चमसमनून्नयध्वम्, उभयतः शुक्रान् कुरुध्वम्, अच्छावाकस्य चमसाध्वर्यो मा तु त्वमुन्नेष्ठाः, प्रतिप्रस्थातश्चतुर्भिर्माशकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलम्बस्व' इति । होतृब्रह्मयजमानोद्गातृहोत्रकचमसानच्छावाकचमसरहितान् स्रुचां पश्चात् सादयित्वा उन्नेत्रा द्रोणकलशात् पूतभृतो द्रोणकलशाच्च क्रमेणाहूतेन सोमेन क्रमेण स्वं-स्वं चमसमुन्नीयोत्तरवेद्यां सादयन्ति । इदं चमसोन्नयनमुच्यते ॥

३३२. **शुक्रामन्थिग्रहणम्**—प्रतिप्रस्थाता द्वौ प्रोक्षितौ द्वावप्रोक्षितौ समि-

च्छकलावादाय प्रोक्षिताऽप्रोक्षितौ द्वौ शकलावध्वर्यवे प्रयच्छति। अध्वर्युः शुक्रमादत्ते। प्रतिप्रस्थाता मन्थिनम्। दक्षिणेन प्रोक्षिताभ्यामपिधायाऽप्रोक्षिताभ्यामधस्तात् सव्येनोपयच्छतः। इदं शुक्रामन्थिग्रहणम्॥

३३३. **उत्तरवेद्यारोहणम्**—अध्वर्युः दक्षिणं द्वार्बाहुं निश्रयमाणो निष्क्रामति, प्रतिप्रस्थातोत्तरम्। 'आयुःसं०तम्, प्राणᳬसं०तम्, अपानᳬसं०तम्, व्या०तम्, चक्षुः०तम्, श्रो०तम्, एतैः षड्भिर्मन्त्रैः प्रतिमन्त्र वोत्तरवेद्याः पश्चाद् ग्रहौ सन्धत्तः। अध्वर्युः दक्षिणेनोत्तरवेदिं परिक्रामति—'स्तुतो०चिषा' इति। उत्तरेण प्रतिप्रस्थाता—'स्तुतो० चिषा' इति। उभौ पुरस्तात् प्रत्यङ्मुखौ उत्तरवेदिमारोहत इति। इदमुत्तरवेद्यारोहणम्॥

३३४. **उत्तरवेद्यवरोहणम्**—'इन्द्रेण स०यासम्' इति 'आयुस्थ०धत्तम्' एतैः षड्भिर्मन्त्रैः यूपाहवनीययोर्मध्ये ग्रहौ सन्धत्तः। उत्तरवेद्या अवरोहतः—'तौदे०ने च' इति। इदमुत्तरवेद्यवरोहणम्।

३३५. **अप्रोक्षितशकलनिरसनम्**—अध्वर्युर्यजमानस्य पाप्मानं मनसा ध्यायन् अप्रोक्षितं शकलं बहिर्वेदिं निरस्यति—'निर०श्मना' इति। एवं प्रतिप्रस्थाता—'नि०ना' इति अप्रोक्षितशकलनिरसनम्।

३३६. **प्रोक्षितशकलाभ्याधानम्**—अध्वर्युः अप उपस्पृश्य प्रोक्षितशकलमभ्यादधाति—'शुक्रै०हा' इति। एवं प्रतिप्रस्थाता 'मन्थि०हा' इति। इदं प्रोक्षितशकलाऽभ्याधानम्।

३३७. **चमसानयनप्रैषः**—चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते। अध्वर्युः पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्नाश्राव्याऽऽह—'प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य' इति। अयं चमसानयनप्रैषः।

३३८. **शुक्रामन्थिप्रचारः**— उभौ वषट्कारे जुहुत० सप्र०जुहोमि स्वाहा। चमसाध्वर्यवश्चमसान् सकृञ्जुह्वति, अनुवषट्कारे पुनरुभौ, चमसाध्वर्यवश्च। अध्वर्युराह—'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य होत्रकाणः चमसाध्वर्यवः सकृत्सकृद् द्रोणकलशादभ्युन्नीयोपावर्तध्वम्, होतुश्चमसाध्वर्यवुपरमैहि, प्रतिप्रस्थातरुत्तरार्धं आहवनीयस्य मन्थिनः सᳬस्रावं जुहुधि, इति। प्रदक्षिणमावृत्य होतुश्चमसे ग्रहस्य संस्रावमवनयति—'हुतं०मनुष्येभ्यः' इति। प्रतिप्रस्थाता आहवनीयस्योत्तरार्धे उपविश्योत्तरार्धे मन्थिनः संस्रावं जुहोति—'एष ते रु०हा' इति। यजमानप्रतिप्रस्थातारौ अप

उपस्पृशतः। प्रतिप्रस्थाता ऽध्वर्योः शुक्रपात्रमादाय स्वीयं मन्थिपात्रं च खरे सादयति। अयं शुक्रामन्थिप्रचारः।

३३९. **सदसि ब्रह्मादिचमसनयनम्**—होतृब्रह्मोद्गातृयजमानानां चमसान् चमसाध्वर्यवः सदसि नयन्ति। प्रशास्त्रादीनां चमसाध्वर्यवः सशेषांश्चमसान् द्रोणकलशादभ्युन्नीयोपावर्तन्ते। इदं सदसि। ब्रह्मादिचमसनयनम्।

३४०. **प्रस्थितयाज्याप्रचारः**—अध्वर्युः मैत्रावरुणचमसमादायाऽऽश्राव्याऽऽह—'प्रशास्तर्यज' इति। वषट्कारानुवषट्कारयोर्होमौ। ब्राह्मणाच्छंसीयचमसमादायाऽऽश्राव्याऽऽह—'ब्रह्मन् यज' इति। होतृचमसमादायाऽऽश्राव्याऽऽह—'पोतर्यज' इति। नेष्टृचमसमादायाऽऽश्राव्याऽऽह—'नेष्टर्यज' इति। आग्नीध्रचमसमादायाश्राव्याऽऽह—'अग्नीद्यज' इति। अयं प्रस्थितयाज्याप्रचारः।

३४१. **प्रशास्त्रादिचमसनयनम्**—ततो होतुरग्रे उपविशति। प्रशास्त्रादीनां चमसाध्वर्यवः सदसि चमसान्नयन्ति। इदं प्रशास्त्रादिचमसनयनम्।

३४२. **द्विदेवत्यग्रहभक्षणम्**—होत्रा 'अयाडग्नीद्' इति पृष्ठे ऽध्वर्युरयाडग्नीदित्याह। होत्रा आत्तमैन्द्रवायवपात्रमध्वर्युप्रतिप्रस्थातारावन्वारभेते। होत्रा भक्षिते तस्मिन्नन्वारब्धे अध्वर्युः होतरुपह्वयस्व, 'प्रतिप्रस्थातरुपह्वयस्व' इति तावुपहूय नासिकयोरुपरि निग्राहं भक्षयति—'मयि०पाहि' इति। प्रतिप्रस्थाता होतारमध्वर्युञ्चोपहूयोक्तमन्त्रेण भक्षयति। पुनर्होत्रा भक्षिते तथैवाध्वर्युः प्रतिप्रस्थाता च मन्त्रेण ऐन्द्रवायववन्मैत्रावरुणपात्रस्य भक्षः। चक्षुषोरुपरि निग्राहं भक्षणम्। 'मयि०पाहि' इति विशेषः। होत्राऽऽश्विनपात्रे भक्षिते ऽपि तथैव भक्षः श्रोत्रयोरुपनिग्राहं सर्वतः परिहारं भक्षणम्। 'मयि०-श्रोत्रं मे पाहि' इति विशेषः। इदं द्विदेवत्यग्रहभक्षणम्।

३४३. **सवनीयेडाभक्षणम्**—अध्वर्युरप उपस्पृश्य हौत्रङ्गुलिपर्वाञ्जनादि करोति। इडोपह्वानकाले चमसिनश्चमसानुपगृह्णन्ति। उपहूतायामिडायां पुरोडाशशकलमैन्द्रवायवपात्रे आमिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे प्रास्यैतानि गृहीत्वा पूर्वद्वारा निष्क्रम्याऽपरद्वाराहविर्धानं प्रपाद्य दक्षिणहविर्धानस्योत्तरचक्रमार्गे सादयत्यातृतीयसवनात्। यथेतमेत्याग्नीध्रे षडवत्तमादधाति। प्रशास्तृसहिताः षट् सशेषामिडां भक्षयित्वा मार्जयन्ते। इदं सवनीयेडाभक्षणम्॥

३४४. **सौमिकवाजिनप्रचारः**—प्राशित्रपरिहरणम्, शाखापवित्रप्रहरणम्। वाजिनप्रचारः। अयं सौमिकवाजिनप्रचारः।

३४५. **चमसभक्षणम्** तत्र सवनीयवद्वाजिनस्यासादनम् । सदसि इडोपहूतांश्चमसान् भक्षयन्ति । तद्यथा— होताऽध्वर्युं प्रतिप्रस्थातारं चोपहूय स्वचमसं भक्षयति । अध्वर्युस्तं प्रतिप्रस्थातारं चोपहूय भक्षयति—'भक्षेहि मा० यामि' इति । एवं प्रतिप्रस्थाता तौ उपहूय । होता ब्रह्माणमुपहूय तच्चमसम् । तथैव यजमानचमसम् । प्रशास्त्रादिचमसांस्तु चमसिनमध्वर्युं प्रतिप्रस्थातारं चोपहूय क्रमेण प्रशास्त्रा होत्रध्वर्युप्रतिप्रस्थातॄनुपहूय स्वचमसम् । अध्वर्युः प्रशास्तारं होतारं प्रतिप्रस्थातारं चोपहूय । प्रतिप्रस्थाता प्रशास्तृहोत्रध्वर्युनुपहूय । एवमन्येषां होत्रकाणां चमसान् भक्षयित्वा होतृचमसं पूर्ववद् भक्षयन्ति । ब्रह्मा होतारमुपहूय स्वचमसम् । यजमानो 'भक्षेहि' इत्यादिमन्त्रेण तथैव स्वचमसम् । पूर्ववत् त्रयो होत्रकचमसान् । इदं चमसभक्षणम्॥

३४६. **चमसाप्यायनम्** – तत आत्मानमभिमृशन्ते—'हिन्व०तिगा' इति । अपः स्पृष्ट्वा एकधनाभिः स्व-स्वचमसानाप्याययन्ति—'आप्या०गथे' इति । इदं चमसाप्यायनम् ॥

३४७. **नराशंससादनम्**—चमसाध्वर्यवो होतृचमसादीन् दक्षिणहविर्धानस्य पश्चादक्षस्याप्यधः सादयन्ति । इदं नराशंससादनम् ॥

३४८. **अच्छावाकवादनप्रैषः**— अध्वर्युः सदसः पुरस्तादासीनस्याऽच्छावाकस्य हस्ते सवनीयशेषान् महत्पुरोडाशशकलमादधदाह—अच्छावाक वदस्व यत्ते वाद्यम् इति । अयमच्छावाकवादनप्रैषः ॥

३४९. **अच्छावाकचमसोन्नयनप्रैषः**—'उपो अस्मान्' इत्यच्छावाकस्य श्रुत्वा होतारमाह—होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्व इति । प्राङायन्नाह— उन्नीयमानेभ्योऽनुब्रू३हि, अच्छावाकस्य चमसाध्वर्युवुन्नयस्व, उभयतः शुक्रं कुरुष्व इति । अयमच्छावाकचमसोन्नयनप्रैषः ॥

३५०. सस्रुचां पश्चाच्चमसं निधाय द्रोणकलशात् पूतभृतो द्रोणकलशादित्युन्नीयोत्तरवेद्यां सादयति । अध्वर्युः अच्छावाकचमसमादायाऽऽश्राव्याह—अच्छावाक यज इति । वषट्कृतानुवषट्कृतयोर्हुत्वा चमसं हुत्वा भक्षणं न कुर्यात् । चमसमाप्याय्य पूर्ववत् सादयति ।

**पन्नेजनीसहितपत्न्यानयनम्**—अध्वर्युराह—अच्छावाक सीद, नेष्टः पत्नीमुदानय, अग्नीदच्छावाकं मे सन्नं प्रब्रूतात् इति । नेष्टा पन्नेजनीहस्तां पत्नीमानयति—'प्रेह्य०सी' इति । पन्नेजनीसहितपत्न्यानयनम् ।

३५१. पूर्वद्वारा निष्क्रम्याऽपरया द्वारा सदः प्रपाद्य पन्नेजनीरादाय स्व-

स्य धिष्ण्यस्य पश्चादसञ्चरे उद्गातृदर्शनमार्गे सादयति । आग्नीध्रः—सन्नो ऽच्छावाको ऽच्छावाकँ सन्नमुपपन्नेजनीरसीषदन् ।

**हविशेषादिभक्षणम्**—यजमानः आग्नीध्रे हविःशेषान् भक्षयति, पत्नी स्वशालायां हविष्यम् । इदं हविःशेषादिभोजनम् ।

३५२. **ऋतुपात्रहोमः**—अध्वर्युर्दक्षिणमृतुपात्रमादत्ते, प्रतिप्रस्थातोत्तरम् । अध्वर्युः परिप्लुपात्रेण द्रोणकलशात् गृह्णाति—'उपसिमध०मि' इति प्रतिप्रस्थाता'उप०माध०मि' इति । अध्वर्युः दक्षिणं द्वार्बाहुं संश्लिष्य निष्क्रामति । प्रतिप्रस्थातोत्तरं द्वार्बाहुं संश्लिष्य हविर्धाने तिष्ठति । होमार्थं गच्छन्तमागच्छन्त 'चाध्वर्युं स्वपात्रेण परिगृह्णाति । अध्वर्युः प्रतिप्रस्थातारं ऋतुना प्रे३ष्य वषट्कृते सशेषं जुहोति । होमाय निष्क्रामति प्रतिप्रस्थाता, प्रविशत्यध्वर्युः । स गृह्णाति—'उप०शुक्रामि' । प्रतिप्रस्थाता ऽध्वर्युवद् यजति । निष्क्रामत्यध्वर्युः प्रविशति प्रतिप्रस्थाता स गृह्णाति—'उप०शुचये० मि' । अध्वर्युः पूर्ववद् यजति । निष्क्रामति प्रतिप्रस्थाता प्रविशत्यध्वर्युः । स गृह्णाति—'उप०नभस्या०मि' प्रतिप्रस्थाता यजति निष्क्रामत्यध्वर्युः । प्रविशति प्रतिप्रस्थाता । स गृह्णाति—'उप०नभस्या०मि' । अध्वर्युर्यजति । निष्क्रामति प्रतिप्रस्थाता । प्रविशत्यध्वर्युः । स पात्रमुखं विपर्यस्य गृह्णाति—'उप०सीषाय०मि' । प्रतिप्रस्थाता पूर्ववद् यजति । निष्क्रामत्यध्वर्युः । प्रविशति प्रतिप्रस्थाता । स विपर्यस्य गृह्णाति—'उप०स्यूर्जामि०मि'इति । अध्वर्युः ऋतुभिः प्रेष्येति यजति । निष्क्रामति प्रतिप्रस्थाता । प्रविशत्यध्वर्युः । स गृह्णाति—'उ०सहा०मि' इति । प्रतिप्रस्थाताऽध्वर्युवद् यजति । निष्क्रामत्यध्वर्युः । प्रविशति प्रतिप्रस्थाता । स गृह्णाति—'उ०सहस्या०मि' इति । अध्वर्युः पूर्ववद् यजति । स विपर्यस्य गृह्णाति—'उ०तपाय०मि' इति । प्रतिप्रस्थाता पूर्ववद् यजति । निष्क्रामत्यध्वर्युः । प्रविशति प्रतिप्रस्थाता ।

**ऋतुयाजविरामप्रैषः**—अध्वर्युस्तमाह—'प्रतिप्रस्थातरुपैतेन पात्रेण रम' इति । अयमृतुयाजविरामप्रैषः ।

३५३. **ऋतुयाजप्रचारः**—ऋतुना प्रेष्यति यजति । प्रशास्त्राऽध्वर्यूं यजतमित्युक्ते आह—होतरेतद् यजेति । वषट्कारे जुहोति । हविर्धानं प्रविशति । प्रतिप्रस्थाता विपर्यस्य गृह्णाति—'उ०सँ सर्पो०मि' इति । ग्रहमादाय दक्षिणद्वार्बाहुं निश्रयमाणो निष्क्रामति । उत्तरं प्रतिप्रस्थाता । 'ऋतुना प्रे३ष्य, गृहपते यज' इति प्रशास्त्रोक्ते यजमानः होतरेतद यज । इत्याह ।

सहोभौ जुहुतः। प्रतिप्रस्थाताऽध्वर्युपात्रे संस्रावमवनयति । अयमृतुयाज-प्रचारः।

३५४. **ऐन्द्राग्नग्रहणम्**—अध्वर्युस्तमाह—'प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाण' इति। प्रतिप्रस्थाता द्रोणकलशात् परिप्लुपात्रेण गृह्णाति—'इन्द्रा० षिता, उप०सीन्द्रा०मि' इति। इदमैन्द्राग्नग्रहणम्।

३५५. **ऋतुपात्रभक्षणम्**—अध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होतृ-पोतृनेष्ट्राग्नीध्रब्राह्मणाच्छंसिमैत्रावरुणैः सह स्वपात्रं प्रथममुखेन भक्षयति—'वसु०मि' इति। तथा प्रतिप्रस्थाता। त्रयाणां परस्परमुपहवः। विपर्यस्य पात्रं होत्रा पोत्रा नेष्ट्रा अच्छावाकेन सहोभौ 'ऋतुभिः प तस्य' इति। विपर्यस्य द्विर्होत्रोभौ—'ऋतुना पीतस्य' इति। अथ वा होत्राध्वर्युः, पोत्रा प्रतिप्रस्थाता नेष्ट्रा ऽध्वर्युः अग्नीधा प्रतिप्रस्थाता, ब्राह्मणाच्छंसिना ऽध्वर्युः, मैत्रावरुणेन होता। विपर्यस्य ऋतुभिर्होता ऽध्वर्युः, पोत्रा प्रति-प्रस्थाता। नेष्ट्रा ऽध्वर्युः। अच्छावाकेन प्रतिप्रस्थाता। विपर्यस्य ऋतुना होत्रा ऽध्वर्युः। होत्रध्वर्युप्रतिप्रस्थातारः परस्परमुपहूय च। इदमृतुपात्र-भक्षणम्।

३५६. **शंसनार्थाध्वर्युप्रश्नः**—अध्वर्युर्होतारं पृच्छति—'प्रणवमुपाꣳशु शꣳ सꣳ शꣳसिष्यसी३ विग्राहा३म्' इति। अयं शंसनार्थाध्वर्युप्रश्नः।

३५७. होता यथा शंसिष्यन् भवति तथा प्रत्याह।

**प्रतिगरः**—अध्वर्युः पात्रं नीचैरवष्टभ्य सव्यमावृत्य प्राङ्मुख उपविश्ये-डाजपं कृत्वा ऽपसव्यमावृत्य होतुरग्रे प्रत्यङ्मुखः प्रह्वस्तिष्ठन् प्रतिगृह्णाति—'आहावेशो३सामो दैव'। तूष्णीं शंसे प्रणवान्ते उपांशु 'ओथामो दैवीं३' प्रणवे 'ओ३थामो दैव'। अवसाने 'ओथामो दैव'। शस्त्रमध्याहावे—'ओं३ शों३ सामो दैव'। शस्त्रान्ते—'ओ३म् इति प्रतिगीर्य। अयं प्रतिगर इत्युच्यते।

३५८. **शस्त्रान्ते वाचनम्**—प्रातःसवने शस्त्रान्ते 'उक्थशाः' इत्युक्त्वा यजमानं वाचयति—'शस्त्रस्य०रयीणाम्' इति। इदं शस्त्रान्तेवाचनम्।

३५९. **शस्त्रप्रायश्चित्तम्**—सदसि पात्रं निधाय प्रङ्त्यापूर्वाज्यात्। स्रुवेण प्रचरण्या वा 'यन्म आत्मन' इति द्वाभ्यां व्याहृतिभिश्च जुहोति। इदं शस्त्रप्रायश्चित्तम्।

३६०. ऐन्द्राग्नं ग्रहमुपोद्यच्छते। चमसाध्वर्यवो नाराशंसान् अध्वर्यु-र्होतारं प्रेष्यति—'उक्थशा यज सोमस्य' इति। वषट्कारानुवषट्कारयो-

र्जुहोति । चमसाध्वर्यवश्चमसान् द्विरनुप्रकम्पयन्ति न जुह्वति । ग्रहमादाया ऽध्वर्युः सदमागच्छति । चमसाध्वर्यवश्चमसान् आदाय सदमागच्छन्ति ।

**आज्यशस्त्रोत्तरभक्षः**—होत्रा भक्षिते तमुपहूय भक्षयति—'वसु० इन्द्राग्निभ्याम्०मि' इति । होत्रोभावुपहूय भक्षिते तं प्रतिप्रस्थातारं चोपहूय भक्षयति - 'नरा०मि' इति प्रतिप्रस्थाता तावुपहूय । ब्रह्मादयो होतारमुपहूय स्वस्वचमसान्नराशंसपीतेन । हिन्वम इत्यात्मानं प्रत्यभिमृश्याण्यायस्वेति चमसानाप्याय्याय पूर्ववत् सादयन्ति । अयमाज्यशस्त्रोत्तरभक्षः ।

३६१. **वैश्वदेवग्रहे सोमग्रहणम्**—तत्रैव पात्रं निधाय शुक्रपात्रमाददान आह—'उन्नेतर्यदेनं वैश्वदेवं ग्रहं गृह्णाम्यथोदञ्चँराजानं पूतभृतमभिसम्पवयताद् दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतात्' इति । द्रोणकलशात् परिप्लुपात्रेण वैश्वदेवं गृह्णाति—'उपविश्वे०मि' इति । परिमृज्य सादयति—'ए०भ्यः' इति । इदं वैश्वदेवग्रहे सोमग्रहणम् ।

३६२. **द्वितीयस्तोत्रोपाकरणम्** - उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशस्थं सोममवनीय दशापवित्रेण द्रोणकलशं मृष्ट्वा ग्रावसु न्युब्जति । अध्वर्युरप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङाद्रुत्य स्तोत्रमुपाकरोति—'ऋ०त्यै' इति । इदं द्वितीयस्तोत्रोपाकरणम् ।

३६३. **माध्यन्दिनसवनीयनिर्वापः**—पूर्ववज्जपति । स्तोत्रे प्रक्रान्ते अग्नीत् सवनीयान्निर्वप इत्याह । आग्नीध्रः प्रथममाग्नेयमेकादशकपालं पुरोडाशं सवनीयांश्चामिक्षावर्जं तन्त्रेण निर्वपति । अयं माध्यन्दिनसवनीयनिर्वापः ।

३६४. **वैश्वदेवग्रहप्रचारः**—प्रस्तोत्रा एषोत्तमेत्युक्ते ऽध्वर्युः प्राङ्मुख उपविश्येडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्रायश्चित्तं हुत्वा वैश्वदेवमादायाऽऽह 'उक्थ०स्य' इति । पूर्ववज्जुहोति । चमसाननुप्रकम्पयन्ति । अयं वैश्वदेवग्रहप्रचारः ।

३६५. **चमसभक्षणम्**—होत्रा भक्षिते तमुपहूयाध्वर्युः—'वसु०विश्वे०मि' इति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारः पूर्ववत् । ब्रह्मादयो होतारमुपहूय स्वस्वचमसान् । चमसाध्वर्यवश्चमसान्मार्जालीये प्रक्षाल्य मैत्रावरुणचमसादीन् उदीचः स्रुचां पश्चात् सादयन्ति ।

**ऋतुपात्रादिप्रक्षालनप्रैषः**—अध्वर्युराह—'प्रतिप्रस्थातरिमे चर्तुपात्रे एत-

च्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृज' इति । अयमृतुपात्रादिप्रक्षालनप्रैषः ।

३६६. प्रतिप्रस्थाता तथा करोति । अध्वर्युः प्राङायन्नाह—'मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय' इति । चमसाध्वर्यवः उन्नेत्रा हृतेन पूतभृत्सोमतृतीयेन क्रमेण चमसानुन्नीयोत्तरवेद्यां सादयन्ति ।

**उक्थ्यप्रथमांशग्रहणम्**—अध्वर्युरुक्थ्यस्थाल्या औपशये पात्रे उक्थ्यतृतीयं गृह्णाति—'उप०देवेभ्य०मि' इति । स्थालीमभिमृशति—'पु०सि'इति । प्रतिप्रस्थाता परिमृज्य सादयति—'एष०त्वा' इति । इदमुक्थ्यप्रथमांशग्रहणम् ।

३६७. **मैत्रावरुणचमसादिभक्षणम्**—उपाकरणादिप्रायश्चित्तहोमान्तम् । आह—'उ०सोमानाम्' इति । पूर्ववज्जुहोति । चमसाध्वर्यवश्चमसान् जुह्वति । पूर्ववन्मैत्रावरुणचमसे संस्रावमवनयति । उत्तरखरश्रोण्यां पात्रं निधाय चमसं मैत्रावरुणाध्वर्युप्रतिप्रस्थातारो भक्षयन्ति—'वसु०मित्रा०मि' इति । मैत्रावरुणोब्रह्मादिचमसास्तं चमसिनमुपहूय । तच्चमसं त्रयः पुनः पूर्ववत् । ब्रह्मादयो मैत्रावरुणमुपहूय । इदं मैत्रावरुणचमसादिभक्षणम् ॥

३६८: **ग्रहप्रचारार्थप्रतिप्रस्थातृप्रैषः**—प्रत्यभिमृश्य नाप्याययन्ति । प्रक्षाल्य ब्राह्मणाच्छंसिचमसादीन्त्सादयति । अध्वर्युः—'प्रतिप्रस्थातर्ग्रहौ ते प्रचर'इति । अयं ग्रहप्रचारार्थप्रतिप्रस्थातृप्रैषः ॥

३६९. **द्वितीयोक्थ्यग्रहणम्**—प्रतिप्रस्थाता प्राङायन्नाह—'ब्राह्मणाच्छंसिनश्चमसमुन्नय' इति । पूर्ववत् पूतभृतो ऽर्धेन चमसानुन्नीय सादयति । प्रतिप्रस्थात उक्थ्यस्थाल्यौपशयपात्रे उक्थ्यस्यार्धं गृह्णाति—'उप०इन्द्रा०मि' इति । पूर्ववदभिमृश्य सादयति । इदं द्वितीयोक्थ्यग्रहणम् ॥

३७०. **ब्राह्मणाच्छंसिचमसप्रभृतिभक्षणम्**—स्तोत्रोपाकरणादि । ब्राह्मणाच्छंसिशस्त्रं प्रतिगीर्य ग्रहमादायाऽऽह—'उक्थशा यज सोमानाम्'इति । पूर्ववत् हुत्वा हुतेषु चमसेषु संस्रावमवनयति पूर्ववत् । पात्रं निधाय ब्राह्मणाच्छंसिचमसं पूर्ववत् त्रयो भक्षयन्ति । ब्राह्मणाच्छंसी ब्रह्मादीनुपहूय तच्चमसान् । पुनस्त्रयः पूर्ववत् । ब्रह्मादयस्तमुपहूय स्वस्वचमसान् । मन्त्रे 'इन्द्रेण पीतस्य' इति विशेषः । प्रत्यभिमर्शनम् । नाप्यायनम् । इदं ब्राह्मणाच्छंसिचमसप्रभृतिभक्षणम् ॥

३७१. **उक्थ्यतृतीयग्रहणम्**—पूर्ववत् प्रक्षाल्याच्छावाकचमसादीन् साद-

यन्ति । प्रतिप्रस्थाता प्राङायन्नाह—अच्छावाकचमसमनूयध्वमुन्नेतः सर्वश एव सोमं राजानं प्रभावय मातिरीरिचः, इति । अध्वर्युः प्रतिप्रस्थातरुपैतेन पात्रेण रमैहि यजमान इति । यजमानेन सह हविर्धानं गत्वा द्रोणकलशं दक्षिणहविर्धानस्य पश्चादक्षं निधाय ग्राव्णः पृथक् कृत्वा नीडे कृष्णाजिने ऋजीषमन्तरेणेषे निधाय । अधिषवचर्मफलकयोः प्राचीनग्रीवमुत्तरलोमः 'यज्ञ प्रतितिष्ठ'इति मन्त्रेणोपस्तृणाति । तस्मिन् पूर्ववत् ग्राव्णः कृत्वा पूर्ववन्मन्त्रेण राजानमुपावहरन्ति । पूर्ववदुद्गातॄन् प्रत्युक्त्वा आधवनीये वसतीवरीणामेकधनानां चार्धमानीय ता एकधना वसतीवरीश्च यथास्थानं सादयन्ति । चमसाध्वर्यव उन्नेत्रा ऽऽहूतेन सर्वशः पूतभृत्सोमेनाच्छावाकचमसमुखान् उन्नीय सादयन्ति । प्रतिप्रस्थाता पूर्ववदौपशयपात्रे उक्थ्यस्थालीस्थं सर्वं राजानं गृह्णाति—'उप०इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामि' इति । नोक्थ्यस्थालीमभिमृशति । मृष्ट्वा न्युब्जति । ग्रहं परिमृज्य सादयति—'एष० ऽग्निभ्यां त्वा' इति । इदमुक्थ्यतृतीयग्रहणम् ।

३७२. **अच्छावाकचमसप्रभृतिभक्षणम्**—दशापवित्रं द्रोणकलशे निधाय स्त्रोत्रोपाकरणादि । अच्छावाकशस्त्रं प्रतिगीर्य पूर्ववत् जुहोति । चमसाँश्च । ब्राह्मणाच्छंसिचमसवदच्छावाकचमसभक्षक्रमः । मन्त्रे 'इन्द्राग्निभ्यां पीतस्य' इति विशेषः । इदम् अच्छावाकचमसप्रभृतिभक्षणम् ।

३७३. **परिप्लुसहितचमसनिधानम्**—चमसप्रक्षालनानन्तरं तान् पूतभृदाधवनीययोर्मध्ये परिप्लुना सह निदधाति । इदं परिप्लुसहितचमसनिधानम् ।

३७४. अध्वर्युः'अग्निर्मूर्द्धादिव' इत्येकामाहुतिं द्वे मिन्दाहुती ? व्याहृतीश्च गत्वा ऽऽह—'प्रशास्तः प्रसुहि, तेन सर्प्पत इत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति । सन्तिष्ठते प्रातःसवनम् । अथ प्रातःसवनमित्यारभ्य (पदार्थ २७०) एतदन्तं कर्म प्रातःसवनमित्युच्यते ।

## अथमाध्यन्दिनम्

३७५. **ग्रावस्तुतप्रैषः**—उत्तरार्घे क्षणान्ते अध्वर्युः प्राङायन्नाह—अभिषोतार एतदाह्वयत ग्रावस्तुतमेहि यजमान । अयं ग्रावस्तुत्प्रैष उच्यते ॥

३७६. **माध्यन्दिनसवनीयप्रेक्षणवाचनादि**—यजमानोऽभिषोतृभिश्च सह पूर्वया द्वारा हविर्धानं प्रविश्य होतृचमसे आधवनीयापोऽवनीय चर्मणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति 'निग्राभ्यास्थ' इत्यादि पूर्ववत् । ता यज-

मानाय प्रदाय चतुर्णामन्यतमं ग्रावाणमादत्ते—'देवस्य त्वा' इत्यादिमन्त्रेण। 'ग्रावासि' इत्यादिमन्त्रेणाभिमन्त्रयते । इदं माध्यन्दिनसवनीयप्रेक्षणवाचनादि ॥

३७७. **अवशिष्टसोमार्धमानम्**—ग्रावाणं चर्मणि प्राक्शिरस निधाय ग्राव्ण उपरि राजानं विस्रस्य प्रातःसवनवन्मिमीते 'इन्द्राय त्वा' इति पञ्चभिः, पञ्चकृत्वस्तूष्णीम् । एकयैकयोत्सर्गं दशकृत्वो मिमानो राजानं सर्वं मिमीते। इदमवशिष्टसोमार्धमानम् ॥

३७८. **ग्रावस्तुत उष्णीषदानम्**—अद्भिरभ्युक्ष्य ग्रावस्तुते राज्ञ उष्णीषं ददाति। इदं ग्रावस्तुते उष्णीषदानम् ॥

३७९. **माध्यन्दिनसवनाभिषवः**—यजमानः अद्भिरभ्युक्ष्य राजवासो[1] ऽध्वर्यवे प्रयच्छति। अध्वर्युः पूर्ववदुपसृजति। सम्प्रयौति। तिरश्चर्मफलके अभिमृशति। यजमानं वृद्धीर्वाचयति । अभिषोतारः प्रातःसवनवत् पर्युपविशन्ति। अध्वर्युः 'आहरोपसृज' इत्याह। उपर्यर्धे होतृचमसेंशून् परिप्लावयन्ति। 'प्रागपाग्' इत्यादिमन्त्रेण। अंशूश्चर्मणि निधाय होतृचमसस्था अपो राशि प्रक्षिप्य राजानं विभज्याकृष्याह 'इहा३ इहा३ इहा३' इत्युक्ता यावदसनिस्रावमपरिमितमभिषुण्वन्ति—आहरोपसृजेत्यादि । उन्नेता आधवनीयादुदुञ्चनेन सम्भरणीये उपसृजति। 'प्रागपाग' इत्यादिसम्भरणीयेंशून् परिप्लावयन्ति। अंशून्निधाय सम्भरणीयजलेन राजानमुपसिच्य विभज्याऽऽकृष्याह। 'इहा३ इहा३ इहा३' इत्युक्ता ग्रावाणमूर्ध्वमुत्क्षिप्य नीचैः पातयन्तीत्यादिक्रीडारूपेणाभिषुण्वन्ति अपरिमितं यावद्रसनिस्रावम्। पुनराहरोपसृजेत्यादि होतृचमसे तूष्णीं अंशून् परिप्लावयन्ति। अभिषुत्य राजानं हस्तेन निष्पीड्य सम्भरणीये राजानं सम्भृत्यान्तरेणेषे उन्नेत्रे प्रयच्छति। उन्नेता आधवनीयापोम्भ्रणान्तरेऽवदीयाऽऽधवनीये पवित्रं वितत्य सम्भरणीमवनयति। **एष एकः पर्यायः**। अम्भ्रणान्तरस्था आधवनीयापो होतृचमसे ऽवनीय 'श्वात्रास्थ' इत्यादि। **एवं द्वितीयमेवं तृतीयम्**। तृतीयपर्यायस्य तृतीये ऽभिषवे इहा३ इत्यस्य स्थाने 'बृहत्-बृहत्-बृहत्' ऋजीषं चर्मणि निधाय सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखे ऋजीषं चतुर्धा कृत्वा व्यपोहति । उद्गातृभ्यः प्राह—सोमोभिषुत इति। अयं माध्यन्दिनसवनीयाभिषवः ॥

३८०. **माध्यन्दिनसवनीयसोमग्रहणम्**—तैर्द्रोणकलशे निहिते दशापवित्रे

---

१. राज्ञः सोमस्यवासः।

वितते उन्नेतारमाह—अप्रमत: सन्ततमानयोपा ँशुग्रहान् ग्रहीष्यामि इति। उक्थ्यग्रहणपर्यन्तं स तथा करोति। अध्वर्युः शुक्रपात्रमादाय धारायां गृह्णाति—'अयं वेन०रिहन्ति। उ०शंडा०मि' इति। परिमृज्य सादयति—'एष ते योनिर्वीर तां पाहि'इति। तथा मन्थिपात्रे पूर्ववत्। बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वाऽपोद्वृत्य बर्हिषी परिमृज्य सादयति पूर्ववत्। दक्षिणर्तुपात्रे गृह्णाति—'मरु०हुवेम। उप०मरुत्वते०मि' इति। सादयति—'एष०निरिन्द्राय त्वा मरुत्वते।' उत्तरर्तुपात्रे गृह्णाति—'इन्द्रम०सुयज्ञाः। उप०मि' इति। परिमृज्य सादयति—'एष०त्वते' इति। आग्रयणस्थं सोमं पात्रान्तरे ऽवनीय तेनोदञ्चनेन चोपरिष्टाद् दशापवित्रे ऽवनीय तिसृणां धाराणामधस्तादाग्रयणं गृह्णाति। पूर्ववत् सादयति। इदं ग्रहेषु माध्यन्दिनसवनीयसोमग्रहणम्॥

३८१. **माध्यन्दिनपवमानार्थसदःप्रसर्पणम्**—द्रोणकलशमुपर्यर्द्धं कृत्वा पयसा हिरण्येन सक्तुभिः क्रमेण श्रीत्वा परिप्लुपात्रं प्रास्य द्रप्सानुमन्त्रणम्। उन्नेतारमाह—'अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् गृहीष्यामि' इति। उन्नेता पूतभृति पवित्रे वितत्याऽधवनीयाद् द्वौ वा त्रीन् वोदञ्चमानयति। अध्वर्युः—अरिक्तो पूतभृदाधवनीयौ पयसा सक्तुभिर्घृतेन च श्रीत्वा द्रोणकलशमभिमृशति—'उप०सीन्द्राय त्वा' इति। अनेनैव मन्त्रेणाधवनीयं पूतभृतं च। उन्नेतारमाह—'उन्ने०न्युब्जतात्' इति। उन्नेता ऽवकाशोपस्थानान्ते तथा करोति। अध्वर्युरप उपस्पृश्य बर्हिषी आदाय निःसर्पति। उद्गात्रादिषु प्रातःसवनवत् समन्वारब्धेषु आहवनीये स्रुवाहुतिं जुहोति—'विश्वे देवा मरुत०स्याम स्वाहा' इति। यथावेदमितरे। द्रप्साहुती प्रातःसवनवद् यजमानः। एतयैव प्रतिप्रस्थाता। अध्वर्युः पूर्ववत् पवमानार्थं सदः सर्पति। इदं माध्यन्दिनपवमानार्थसदःप्रसर्पणम्॥

३८२. पूर्ववत् बर्हिषी प्रयच्छति। पूर्ववदुपाकरणं जपति पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति—'सुपर्णोऽसि०रय' इति।

**दधिघर्मार्थदध्याहरणप्रैषः**—चतुर्होतारं व्याख्याय समाप्ते साम्निसम्प्रैषमाह—'अग्नीदग्नीन् विहर,बर्हिस्तृणाहि, पुरोडाशान् अलङ्कुरु, प्रतिप्रस्थातदधिघर्माय दध्याहर' इति। अयं दधिघर्मार्थदध्याहरणप्रैषः॥

३८३. अप उपस्पृश्य 'एहि यजमान' [इत्युक्त्वा] तेन सह पूर्वया द्वारा हविर्धानं प्रविश्य समस्तं राजानं प्रातःसवनोक्तमन्त्रेणोपतिष्ठते। ततः प्रातःसवनवदवकाशैरुपतिष्ठते अध्वर्युर्यजमानौ। उन्नेता प्रातःसवनवत्

पूतभृति राजानमवनीयाधवनीयं न्युब्जति । प्रातःसवनवत् धिष्ण्यव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः दधिघर्मस्यादौ घर्मोक्ता पूर्वा शान्तिं पठति ।

**आहृतदध्यवेक्षणम्**– ततो हविर्धानयोर्मध्ये उपविश्य प्रतिप्रस्थात्रा दधिघर्मार्थमाहृतं दध्यवेक्षते– 'ज्योति०दुग्धम्' । इति इदमाहृतदध्यवेक्षणम् ॥

३८४. चमसे बर्हिषी अन्तर्धाय दधि गृह्णाति—'यावती०ग्यस्तृतम्' इति । अपोद्धृत्य बर्हिषी दध्यवेक्ष्य मन्त्रं पठति—'वाक् च त्वा०शृतं कृणु' इति ।

**होतृवाद्यवादनप्रैषः**– होतारमाह– 'होतर्वदस्व यत्ते वाद्यम्' इति । अयं होतृवाद्यवादनप्रैषः ॥

३८५. **दधिघर्मप्रचारः**—चमसमादाय उपोत्तिष्ठन्नाह—'श्रातꣳ हविः' इति । अत्याग्न्याश्राव्याऽऽह– 'दधि घर्मस्य यज' इति । वषट्कृते जुहोति—'यमिन्द्रमा०तेभ्यः स्वाहा' इति । अयं दधिघर्मप्रचारः ॥

३८६. **दधिघर्मभक्षः**—अनुवषट्कारे हुत्वा चमसं होत्रे हरति । होत्रध्वर्यु प्रतिप्रस्थात्रग्नीत् स्तोतृयजमानाः क्रमेण परस्परमुपहूय प्राणभक्षं भक्षयन्ति—'मयित्य०यानि' इति । अयं दधिघर्मभक्षः ॥

३८७. **माध्यन्दिनसवनीयप्रचारः**—निर्णिज्यं पात्रं प्रयच्छति । तूष्णीं शाखां मेक्षणं च प्रहृत्योपवेषं निरस्यति । आग्नीध्रः भिन्नपात्र्यां पुरोडाशं पूर्ववत् सवनीयाँश्चोद्वास्य खरे सादयति । अध्वर्युः यजमानेन आसन्नाभिमर्शने कृते आग्नेयेन पशुपुरोडाशेन प्रचर्य जुहूपभृतोरुपस्तृणान आह—'माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रू३हि' इति सवनीयायां द्विर्द्विरवद्यति, अभिघारयति, प्रत्यनक्ति । उपभृति पुरोडाशस्यावदाय सवनीयानामवद्यति । द्विरभिघारयति । न प्रत्यनक्ति । प्रथमं जुहूपभृतोरुपस्तीर्य पुरोडाशस्योपभृत्यप्युपस्तीर्य ? नाभिघार्येष्ट्वा तस्योपरि सवनीयानामवदानं जुह्वामुपस्तरणं वा । माध्यन्दिनीयान् पुरोडाशान् प्रस्थितान् प्रे३ष्य' इति प्रेष्यति । ततः स्विष्टकृतं हुत्वा प्रातःसवनवद्धोतुरग्रे इडापात्रं निदधाति । अयं माध्यन्दिनसवनीयप्रचारः ।

३८८. **माध्यन्दिनीयचमसौन्नयनप्रैषः**—सर्वेषां सवनीयानां प्रातःसवन एव निर्वापे पशुपुरोडाशेन प्राशित्रान्तेन प्रचर्य माध्यन्दिनीयैः प्रचर्य प्राङायन्नाह—'उन्नी० हि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वमच्छावाकस्य

चमसाध्वर्योऽपि त्वं चमसमुन्नयस्व प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलम्बस्व' इति। अयं माध्यन्दिनीयचमसौन्नयनप्रषः।

३८९. **माध्यन्दिनीयशुक्रामन्थिप्रैषः**—पूर्ववच्छुक्रामन्थिप्रचारः। सर्वांश्चमसानुन्नयन्ति। आह—'माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो० प्रेष्य' इति। अयं माध्यन्दिनीयशुक्रामन्थिप्रैषः।

३९०. **माध्यन्दिनीयप्रस्थितयाज्याप्रचारः**—नेष्टृचमसहोमानन्तरं अच्छावाकचमसहोमः। अयं माध्यन्दिनीयप्रस्थितयाज्याप्रचारः।

३९१. **हविःशेषप्राशनम्**—षड्ढोत्राः संयाज्याग्रेण होतारमुपविश्य 'अयाडग्नीद्' इत्यादि। इडोपह्वानान्तरं प्राशित्रहरणं तूष्णीमन्तर्वेदि प्रणीतानिनयनम्। इडोपहुतांश्चमसान् भक्षयन्ति। नेष्ट्रनन्तरमच्छावाकः। प्रातःसवनवत्—'भक्षेहि' इति मन्त्रे **रुद्रवद्गणस्येति माध्यन्दिनस्य सवनस्य त्रिष्टुप् छंदस** इति यथास्थानमूहः। प्रातःसवनवन्नाराशंससादनं यजमानस्य हविशेषप्राशनं पत्न्या हविस्यभोजनम्।

**दक्षिणारम्भकहोमः**—अध्वर्युः सस्रुवासपूर्त्राज्यस्थालीं स्रुचं वासस्तस्यान्तिमायां दशायां ग्रथितं हिरण्यशकलं चादाय यजमानमामन्त्र्य चात्वालोत्करयोर्मध्येन प्रविश्य यजमानेन सहोत्तरेणाग्नीध्रीयं सदश्च परीत्य पूर्वद्वारा शालां प्रविश्य शालामुखीय आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा ज्ञातिषु समन्वारब्धेषु वाससा संप्रच्छन्नेषु वैसर्जनवद्वसनस्यान्तं स्रुगृरोड ? उपसङ्गृह्यहिरण्यं स्रुग्बिले धारयन् शालामुखीये जुहोति—'उदुत्यम' इत्यृचा। पुनर्गृहीत्वा 'चित्रन्' इत्यृचा। पुनर्गृहीत्वा 'अग्ने नय' इत्यृचा आग्नीध्रीये। स्रुग्बिलाद्धिरण्यमुद्गृह्णाति—'दिवं गच्छ सुवपतः' इति। अयं दक्षिणारम्भकहोम उच्यते।

३९२. **दक्षिणानयनम्**—पूर्वमेव चात्वालोत्करयोर्मध्येन प्रवेश्य सदो दक्षिणभागे दक्षिणास्थापिता भवन्ति। सदः शालामुखीययोः आग्नीध्रीययोश्चात्वालोत्करयोश्च मध्येनोदीचीं नीत्वा तत्रैकमस्थापयति। एतद् दक्षिणानयन मुच्यते।

३९३. **दक्षिणाविभजनम्**—ततो यजमानस्ताः प्रदक्षिणं पर्येति—'रूपेण वो०वयः' इति। स्वीयकृष्णाजिनपुच्छेन दक्षिणाभूता गास्त्रासयित्वा विभजति—'तुथो वो० अधिनाके' इति। तत्र वर्गप्रथमानामृत्विजां द्वादश द्वादश।

द्वितीयानां [षट् षट् । तृतीयानां][1] चतस्रश्चतस्रः । तुरीयाणाम् तिस्र-स्तिस्रः । निष्क्रयस्याप्येवमेव विभागः । इदं दक्षिणाविभजनम् ।

३६४. **सौमिकदक्षिणादानम्**—ततः सदसि गच्छति—'एतत्ते अग्ने राध०नयन्तीः' इति । सदसः पुरस्तादासीनमात्रेयं ब्राह्मणं प्रत्येति—'ब्राह्मणमद्य० सुधातु दक्षिणम्' इति । किञ्चित् किञ्चिद् गृहीत्वा तं पृच्छति त्रिः—'क आत्रेयः' इति । स द्विवारं अयमहमिति वदति,तृतीये त्वहमित्येव । यजमानस्तं सम्पूज्य हस्ते तस्मै हिरण्यं ददाति 'चन्द्रमँ्ह' इति । यथा-सम्भवं वस्त्रादि च ददाति । आग्नीध्रीयं गत्वा ऽग्नीधे हिरण्यं दक्षिणाभागं ददाति । अग्नीद् यथा भागं दक्षिणां ते ददामि इति । एवं सदसि गत्वा ब्रह्मणे होत्रे उद्गात्रे च । हविर्धाने गत्वा ऽध्वर्यवे प्रतिप्रस्थात्रे च । चमसाध्वर्यु भ्य-स्तु ऋतुदक्षिणाभिन्नां यथासम्भवं दक्षिणां ददाति । पुनः सदो गत्वा प्रस्तोत्रे मैत्रावरुणाय ब्राह्मणाच्छंसिने ऽच्छावाकाय नेष्ट्रे उन्नेत्रे सुब्रह्मण्याय च दत्वा प्रसर्पकेभ्यो विद्याविशेषानुरूपां ऋतुदक्षिणाभिन्नां दक्षिणांशं तदीयं ददाति । प्रकृतिवत् सर्वे प्रतिगृह्णन्ति । प्रतिग्रहमन्त्रे 'रुद्राय गाः' इत्यूहो विशेषः । इदं सौमिकदक्षिणादानमित्युच्यते ।

३६५. **दक्षिणोत्तरवैश्वकर्मणहोमः**—अध्वर्युः यजमानमामन्त्र्य तेन सहाग्नीध्रीयं गत्वा चतुर्गृहीतेन स्रुचा आग्नीध्रीये जुहोति 'यज्ञपतिमृषय० सृजतु विश्वकर्मा स्वाहा' इति । पुनस्तथैव जुहोति—'घोरा ऋषयो०पात्व-स्मान्त्स्वाहा' इति । पुनर्जुहोति—'अन्यान् त्सा०स्वस्तये स्वाहा' इति । 'ये भक्षयन्तो०विश्वकर्मा स्वाहा' इति । 'नमः पितृभ्यो०यिष्ट स्वाहा' इति । अयं दक्षिणोत्तरवैश्वकर्मणहोम उच्यते ।

३६६. **दक्षिणोत्तराज्ञ्होमः**—शालामुखीयं गत्वा यजमाने ऽन्वारब्धे तथैव जुहोति—'ये देवा यज्ञहनों०गच्छेम सुकृतो वयँ्स्वाहा' इति । 'ये देवा यज्ञमुषों०वयँ् स्वाहा' इति । तत आग्नीध्रीयं गच्छति—'आगन्म मित्रावरुणा०रोचने दिवः' इति । तत्र 'ये देवा' इत्यादि होमद्वयं तत्र **पृथिव्या**मित्यस्य स्थानेन्**तरिक्षे** इत्यूहः । तत आहवनीयसमीपं गच्छति—'यास्ते रात्रीः० स्तरतारंजाँ्सि' इति तत्रापि 'ये देवा' इति होमद्वयं भवति । मन्त्रे **पृथिव्या**मित्यस्य स्थाने **दिवी**त्यूहः ।

---

१. अयं पाठोमुद्रणे **भ्रष्टः** । सोमयागे ऋत्विजां चत्वारो विभाग श्रूयन्ते । तत्र प्रथम वर्गस्थानां यावती दक्षिणा, तस्यार्धं द्वितीयवर्गस्थानामर्धिनाम्, तृतीयोभाग-स्तृतीयवर्गस्थानां तृतीयिनम्, चतुर्थो भागश्चतुर्थवर्गस्थानां पादिनाम् ।

**दक्षिणोत्तराङ्गहोमोपस्थानम्**– तत आहवनीयमुपतिष्ठते—'येनेन्द्रा० आधेह्येनम्' इति । इदं दक्षिणोत्तराङ्गहोमोपस्थानमित्युच्यते ।

३९७. **दक्षिणासमनुदेशः**—अध्वर्युर्यजमानं प्राञ्चमीक्षयति—'विसुवः पश्य व्यन्तरिक्षम्' इति । सदस्युपवेशयति—'यतस्व सदस्यैः' इति । यजमानो दक्षिणाः समनुदिशति—'अस्मद्रात्रा देवत्रा० तन्नः सँस्कृतम्' इति । अयं दक्षिणासमनुदेशः ।

३९८. **मरुत्वतीयग्रहद्वयप्रचारः**—अध्वर्युः प्राङायन्नाह—'इन्द्राय मरुत्वते ऽनुब्रू३हि' इति । प्रतिप्रस्थाता मरुत्वतीयौ ग्रहावादाय निष्क्रामति । अध्वर्युर्दक्षिणेन प्रथमं सव्येन द्वितीयं ग्रहमादायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वितीयं प्रदायाऽऽश्राव्याऽऽह—'इन्द्राय मरुत्वते प्रे३ष्य' इति । वषट्कारे त्नुवषट्कारे चोभौ जुहुतः । प्रतिप्रस्थाता ऽध्वर्युपात्रे ग्रहस्य संस्रावमवनयति । अयं मरुत्वतीयग्रहद्वयप्रचारः ।

३९९. **मरुत्वतीयतृतीयपात्रेसोमग्रहणम्**—अध्वर्युस्तमाह—'प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाण' इति । प्रतिप्रस्थाता तस्मिन् द्रोणकलशात् परिप्लुपात्रेण गृह्णाति—'मरुत्वाँ इन्द्रवृ० प्रदिवः सुतानाम् । उप०मरुत्वते०मि' इति । पूर्ववत् सादयति । इदं तृतीयमरुत्वतीयतृतीयपात्रे सोमग्रहणम् ।

४००. द्विदेवत्यवद्धोमगमने पात्रपरिहरणम् । अध्वर्युर्होत्रे पात्रं प्रदाय तेन भक्षिते तं प्रतिप्रस्थातारं चोपहूय भक्षयति । भक्षणमन्त्रे **रुद्रवद्गणस्येति वसुमद्गणस्येत्यस्य** स्थाने एवं तावुपहूय प्रतिप्रस्थाता । अध्वर्युः पात्रं निगृह्याऽऽवृत्येडाजपं कृत्वा शस्त्रं प्रतिगीय शस्त्रसमाप्तौ माध्यन्दिनसवने सर्वत्रोक्थं वाचीति वदति । तत्रैव पात्रं विधाय शस्त्रप्रायश्चित्तानि जुहोति ।

**मरुत्वतीयतृतीयग्रहप्रचारः**—अध्वर्युः तृतीयं मरुत्वतीयमुपोद्यच्छते, चमसाध्वर्यवो नाराशंसान् । आश्राव्याह—'उक्थशा यज सोमस्य' इति वषट्कारे ऽनुवषट्कारे च जुहोति । चमसाध्वर्यवश्चमसाननुप्रकम्पयन्ति । अयं मरुत्वतीयतृतीयग्रहप्रचारः ॥

४०१. **माध्यन्दिनसवनीयनाराशंससादनम्**—अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते उक्तमन्त्रेण भक्षयति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारो नराशंसपीतेन भक्षयन्ति । ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचमसम् ।

आत्मानमभिमृश्याऽऽप्याय्य नाराशंसान् सादयन्ति। इदं माध्यन्दिनसवनीय-नाराशंससादनम् ॥

४०२. **माहेन्द्रग्रहग्रहणम्**—अध्वर्युः तत्रैव पात्रं निधाय प्राङेत्य शुक्र-पात्रमाददान आह—'उन्नेतर्यदेमं माहेन्द्रं ग्रहं गृह्णाम्यथोदञ्चँ राजानं पूत-भृतमभिसंपवयताद् दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतात्' इति। द्रोणकल-शात् परिप्लुपात्रेण शुक्रपात्रे माहेन्द्रं गृह्णाति—'महाँ इन्द्रो० वावृधे। उप० महेन्द्राय०मि' इति। परिमृज्य सादयति—'एष ते योनिर्महेन्द्राय त्वा' इति। इदं माहेन्द्रग्रहग्रहणम् ॥

४०३. **माध्यन्दिनपवमानस्तोत्रोपाकरणम्**—उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशमवनीय मृष्ट्वा न्युब्जति। अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङुद्रुत्य स्तोत्रमुपाकरोति। इदं माध्यन्दिनपवमान-स्तोत्रोपाकरणम् ॥

४०४. **अभिषवप्रैषः**—समाप्ते साम्नि सम्प्रैषमाह—'अभिषोतारोऽभि-षुणुत, अग्नीदाशिरं विनय, उलूखलमुद्वास्य प्रतिप्रस्थातर्वारुणमेककपालं निर्वप, सौम्यस्य विद्धि।' अयमभिषवप्रैष उच्यते ॥

४०५. **माहेन्द्रग्रहप्रचारः**—प्रतिप्रस्थातृनेष्ट्रादयो ऽभिषोतारश्चर्मणि ग्रावभिः शुष्काभिषवं कुर्वन्ति स्तोत्रसमाप्तिपर्यन्तम्। तथा आग्नीध्रो मुसले-नोलूखलमुच्चैर्वादयति। अध्वर्युः 'अग्नीत् सवनीयान्निर्वप' इत्याह। स्तो-त्रसमाप्त्यनन्तरं आग्नीध्रः प्रातःसवनवदामिक्षावर्जं सवनीयान्निर्वपति। अध्वर्युः इडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्राङेत्य माहेन्द्रं ग्रहमुद्यच्छते। चम-साध्वर्यवो नाराशंसान्। पूर्ववदाश्रावणाद्य वषट्कारहोमान्तम्। अयं माहे-न्द्रग्रहप्रचारः ॥

४०६. **आग्नेयातिग्राह्यग्रहप्रचारः**—प्रतिप्रस्थाता आग्नेयमतिग्राह्य होष्य-न्नवेक्षते—'अग्ने तेजस्विन् तेजस्वी०मनुष्येषु कुरु' इति। जुहोति—'दीक्षायै च त्वा० ॥ तेजसे जुहोमि स्वाहा' इति। यजमानं वाचयति—'तेजोविदसि० तेजो हासीत्' इति। अयमाग्नेयातिग्राह्यग्रहप्रचारः ॥

४०७. **ऐन्द्रातिग्राह्यग्रहप्रचारः**—नेष्टा ऐन्द्रमादायावेक्षते—'इन्द्रोजस्वि० कुरु' इति। जुहोति—'ब्राह्मणश्च त्वा०स्वाहा' इति वाचयति—'ओजो विद०मोजो हासीत्' इति। अयमैन्द्रातिग्राह्यग्रहप्रचारः ॥

४०८. **सौर्यातिग्राह्यग्रहप्रचारः**—उन्नेता सौर्यमादायावेक्षते—'सूर्य भ्राज-

स्वि०कुरु' इति । जुहोति—'वायोश्चत्वा०स्वाहा' इति । वाचयति—'सुवर्विदसि० सुवर्हासीत्' इति अयं सौर्यातिग्राह्यग्रहप्रचारः ॥

४०९. अध्वर्युः अनुवषट्कृते पुनर्माहेन्द्रं जुहोति । चमसाध्वर्यवश्चमसाननुप्रकम्पयन्ति । एतत् पात्रं नाराशंसा अतिग्राह्यश्चाऽन्वायन्ति ।

**अतिग्राह्यभक्षणम्**—अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते मन्त्रेणोक्तेन भक्षयति । होतृचमसं नराशंसपीतेन त्रयः । ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचमसान् । यजमानो ऽध्वर्युमुपहूय आग्नेयं भक्षयति—'मयि मेधां मयि० स्तेजो दधातु' इति । तथैवैन्द्रम्—'मयि०सूर्यो भ्राजो०तु' इति । इदमतिग्राह्यभक्षणमुच्यते ॥

४१०. आत्मानमभिमृशते । चमसाप्यायनं न भवति । तान् प्रक्षाल्य स्रुचां पश्चात् मैत्रावरुणचमसप्रमुखान् सादयन्ति । अध्वर्युः—'प्रतिप्रस्थातरिमे चर्तु०यात्रेष्वपि सृज' इति वदति । प्रतिप्रस्थाता ऋतुपात्रे शुक्रपात्रमतिग्राह्यांश्च मार्जालीये प्रक्षाल्य स्वस्थाने सादयति । मैत्रावरुणचमसमित्यादि त्रय उक्थ्यपर्यायाः प्रातःसवनवत् । सर्वत्र ग्रहेषु सोमग्रहणे मन्त्रे 'इन्द्राय त्वा जुष्टं गृह्णामि' इति । सादनमन्त्रः—'एष ते योनिरिन्द्राय त्वा' इति । भक्षणमन्त्रे **इन्द्रेण पीतस्येति**। यजमानेन सह हविर्धानं गत्वा आधवनीयमुत्तानं कृत्वा तस्मिन् सर्वा वसतीवरीरेकधनाश्चावनीय मृष्ट्वा यथास्थानं न्युब्जति । सवनप्रायश्चित्ते **अग्नि मूर्धेत्यस्य** स्थाने **भुवो यज्ञस्य रजसश्च नेता** इत्यृचा होमः । प्रशास्तःप्रसुहीत्युक्ते यदुक्तं तत् पूर्ववत् । अयं माध्यन्दिनं सवनम् (संख्या ३७५) इत्यारभ्य एतदन्तं कर्म माध्यन्दिनं सवनमित्युच्यते ॥

## अथ तृतीयसवनम्

४११. **तृतीयसवनारम्भकप्रैषः**—देवीर्द्वारावित्याद्युत्तरार्धेक्षणान्तं पूर्ववत् । अध्वर्युः प्राङायन्नाह—'अग्नीत् परिश्रपणमाहर, प्रतिप्रस्थातराशिरमानय, शृतातङ्क्यमादित्यग्रहाय दध्याहर, एहि यजमान' इति । अयं तृतीयसवनारम्भकप्रैषः ॥

४१२. **तृतीयसवनसम्बन्ध्यभिषवः**—यथासम्प्रैष ते कुर्वन्ति । यजमानेन सहविहर्धानं प्रविश्योपांशुपात्रस्थमंशुं माध्यन्दिनीय ऋजीषे प्रक्षिप्य होतृचमसे आधवनीयापो ऽवनीय चर्मणि निधाय **निग्राभ्यास्थेत्यादिमन्त्रेण** यजमानाय दत्वा **देवस्य त्वेत्यादिमन्त्रेण** कमपि ग्रावाणमादायाभिमन्त्र्य **श्वात्रेस्थेत्यादि-**

मन्त्रेण ऋजीषं होतृचमसीयाभिरुपसृज्य **यत्ते सोमे**त्यादिमन्त्रेण संप्रयुत्य, **धिषणे वीडू** इत्यादिमन्त्रेण चर्मान्तर्हिते फलके अभिमृश्य वृद्धीर्वाचयित्वा 'आहरोपसृज' इत्यादि । उपर्यर्धे होतृचमसे ऋजीषं परिप्लावयति । **प्रागपागि**त्यादिमन्त्रेण । ऋजीषं चर्मणि निधायाध्वर्युरेव यावद् रसनिस्रावमभिषुणोति । 'आहरोपसृज' इत्यादि । एवं द्वितीयमेवं तृतीयम् । निग्राभवर्जं चतुर्थम् । राजानं हस्तेन निष्पीड्य सम्भरणीये सम्भृत्य पूर्ववदुन्नेत्रे प्रयच्छति । उन्नेता पूर्ववदवनयति । एष एकः पर्यायः । एवं द्वितीयमेवं तृतीयम् । पूर्ववद्धोतृचमसे ऽवनीय **श्वात्रा** इत्यादि । ऋजीषं दशापवित्रेण परिवेष्ट्यान्तरेणेषे उन्नेत्रे प्रयच्छति उन्नेता तदाधवनीये विक्षाल्य प्रपीड्यान्तरेणेषे उपरि नीत्वा प्रातःसवनीय ऋजीषे निक्षिपति । अयं तृतीयसवनसम्बन्ध्यभिषवः ॥

४१३. **आदित्यग्रहे शृतातङ्कग्रहणम्**— —अध्वर्युः परिश्रयणीयवासोभ्यां हविर्धानद्वारौ परिश्रित्यादित्यस्थाल्या औपशयपात्रे तस्याः सकाशात् तृतीयांशं गृह्णाति—'कदाचनस्त०पृच्यते । उप०स्यादित्येभ्य०मि' इति । बर्हिषी अन्तर्धाय शृतातङ्कमादयति—'कदाचन अ०तं दिवि । इय०मि' इति । अपोद्धृत्य बर्हिषी आदित्यस्थाल्या अर्धं गृह्णाति—'यज्ञो देवानां०रासत । उप० मि' इति । इदमादित्यग्रहे शृतातङ्कग्रहणम् ॥

४१४. उपांशुसवनस्य स्थूलप्रदेशेन ग्रहमालोडयति—'विवस्व आदित्यै० श्रीणामि' इति । उपांशुसवनमुद्गृह्णाति । तस्य यदि शीघ्रं सोमबिन्दुः प्रस्कन्देद् वर्षुकः पर्जन्यः स्याद् यदि चिरं तर्ह्यवर्षुकः । ग्रहमनासादयन् उपांशुसवनं दशापवित्रेण परिवेष्ट्य यथा सोमस्योर्मिर्भवति तथा पात्रस्याधस्तात् द्विश्चतुर्वा सोमं पातयन्नुद्धन्ति—'आसमुद्रादान्तरिक्षा०तिम्' इति ।

**आदित्यग्रहप्रचारप्रैषः**—उपांशुसवनं दशापवित्रेण परिमृज्य प्रक्षिप्य द्वारौ विवृत्य बर्हिर्मुष्टिना ग्रहमपिधायोत्तिष्ठन्नाह—'आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योनुब्रू३हि' इति । अत्याक्रम्याश्राव्याऽऽह—'आदित्येभ्यः प्रे३ष्य' इति । वषट्कृते बर्हिर्मुष्टिमग्नौ प्रक्षिप्यादित्यं जुहोति । नान्वीक्षते । पर्यावृत्तस्य प्रतिप्रस्थाता पात्रमादत्ते । अयम् आदित्यग्रहप्रचारप्रैषः ॥

४१५. **आग्रयणे तृतीयसवनीयसोमग्रहणम्**—उपवेषनिरसनान्ते प्रतिहर्त्रा पूतभृति पवित्रे वितते उन्नेता आधवनीयात् द्वौ त्रीन्वोदञ्चनान् तस्मिन्नवनयति । अध्वर्युः आग्रयणस्थं सोमं पात्रान्तरे ऽवनीय तदादत्ते । प्रतिप्रस्थाता

सोपशयामापित्यस्थालीम् । उन्नेत्रा उदञ्चनादिचतुष्टयमुपर्यवनीय चतसृणां धाराणामधस्तादाग्रयणं प्रातःसवनवद् गृहीत्वा ऽभिहिङ्कृत्याधिवदनं कृत्वा परिमृज्य सादयति । इदमाग्रयणे तृतीयसवनीयसोमग्रहणम् ॥

४१६. पूतभृतो बिलाद् दशापवित्रमपनीय बर्हिषी अन्तर्धायाग्नीध्रा बिलोडितं संशेषमाशिरं पूतभृत्यवनयति–अन्वारब्धायां पत्न्यां प्रत्यृचं सर्वान्ते वा । ताश्चर्चः—'अस्मे देवासो वपुषे चिकित्सत' इत्यादयश्चतस्रः । ततो बर्हिषी अपोद्धृत्य परिप्लुपात्रं पूतभृति प्रास्य पूर्ववत् द्रप्साननुमन्त्रयते । तत आधवनीयाभिमर्शनादि उन्नेतृप्रैषान्तम् ।

**तृतीयसवनीयहोमः**—अध्वर्युर्बर्हिषी आदायोपनिःसृप्य प्रातःसवनवत् समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति—'इदं तृतीयँ॑स०नयन्तु स्वाहा' इति । अयं तृतीयसवनीयहोमः ॥

४१७. अध्वर्युर्माध्यन्दिनसवनवत् स्तोत्रमुपाकृत्य पवमानस्य नवम्यां प्रस्तुतायां वाचयति—'सघासि०पारय' इति । पञ्चहोतारं व्याख्याय समाप्ते साम्नि सम्प्रैषमाह—'आग्नीच्छालाकान् विहर०पशौ संवदस्व' इति । पूर्ववद्धविर्धानं प्रविश्य समस्तसोममुपतिष्ठते 'वैष्णो त्वन्न' इत्यादिना । प्रातः-सवनवच्छालाकान् विहृत्य धिष्ण्यव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः अग्नीदुत्तर बर्हिरित्यादि अग्नीषोमीयवद् वक्षः परिहरणान्तम् ।

**तृतीयसवनीयप्रचारः**—आग्नीध्रः प्रातःसवनवदामिक्षारहितान् सवनीयान् सादयति । अध्वर्युस्तैः प्रचरति । अयं तृतीयसवनीयप्रचारः ।

३१८. **तृतीयसवनीयहोतृचमसप्रचारः**—होतृसकाशे इडापात्रं निधाय प्राङान्नाह—'उन्नीमानेभ्यो०यध्वं तीव्राँ आशीवतः कुरुध्वमुन्नेतः ०य' इति । चमसाध्वर्यवः पूर्ववच्चमसानुन्नीय तेषु किञ्चित् किञ्चिदाशिरमवनीयोत्तरवेद्यां सादयन्ति । अध्वर्युर्होतृचमसमादायाऽऽह—तृतीयस्य सवनस्यर्भुमतो विभुवतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राँ आशीर्वं इन्द्राय सोमा०ष्य' इति । वषट्कृते जुहोति—'श्येनाय पत्वने स्वाहा' इति । अनुवषट्कृते होमः—'तृप्यं०स्वाहा' इति । द्विः सर्वांश्चमसान् जुह्वति । अयं तृतीयसवनीयहोतृचमसप्रचारः ।

४१९. **तृतीयसवनीयप्रस्थितयाज्याप्रचारः**—अध्वर्युः सम्प्रैषमाह—'प्रैतु होतु० तसकृदाशीर्वत्तो ऽभ्युन्नीयोपावर्त्तध्वम्' इति । यन्ति होत्रादि-चमसाः । चमसाध्वर्यवो होत्रकचमसान् सशेषान् पूतभृतोऽभ्युन्नीयोपावर्तन्ते ।

अध्वर्युर्मैत्रावरुणचमसादीन् क्रमेणाऽऽदाय पूर्ववत् प्रस्थितयाज्याभिर्यजति। प्रशास्त्रा वषट्कृते 'विष्टं०हा' इति जुहोति। अनुवषट्कृते 'तृप्यन्ताम्' इत्यादिमन्त्रेण षण्णामपि। ब्राह्मणाच्छंसिचमसे 'परिधये०हा' इति। पोतृचमसे 'ऊर्ज०हा' इति। नेष्टृचमसे पयसे०हा' इति। अच्छावाकचमसे 'प्रजा०हा' इति। आग्नीध्रचमसे 'ऋतमृ०हा' इति। अयं तृतीयसवनीयप्रस्थितयाज्याप्रचारः।

४२०. प्रदक्षिणमावृत्य होतुरग्रे उपवेशनादि इडोपहूतचमसभक्षान्तम्। भक्षमन्त्रे **आदित्यवद्गणस्ये**ति तृतीयस्य सवनस्य **जगतीछन्दस इन्द्रपीतस्ये**त्यूहः।

**सौमिकपुरोडाशशकलदानम्** नाराशंससादनान्तरं ब्रह्मादयः सर्वे प्राचीनावीतं कृत्वा स्वस्वचमससमीपे त्रींस्त्रीन् पुरोडाशशकलान् प्रक्षिपन्ति। अध्वर्युप्रतिप्रस्थातारौ होतृचमससमीपे। स्वस्थाने उपविश्यानुमन्त्रयते— 'अत्र पितरो यथाभागं मन्दध्वम्' इति। अध्वर्युरत्रस्थ एव। इदं सौमिक-पुरोडाशशकलदानम्।

४२१. यजमानो हविःशेषं पत्नी हविष्यं चाश्नाति।

**वैश्वदेवग्रहप्रचारः**—अध्वर्युर्हविर्धानात् प्राङायन्नाह—'देवाय सवित्रेऽनुब्रू३हि, प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद् ग्रहं गृहीत्वोपास्वमासीषदः' इति। प्रतिप्रस्थाता तथा गृह्णाति— 'वाम०स्याम। उप०सि देवाय त्वा सवित्रे' इति। हुत्वा सशेषे वैश्वदेवं पूतभृतः परिप्लुना गृह्णाति—'सुश०मि' इति। सदो गत्वा होत्रा समीक्ष्य शस्त्रं प्रतिगृणाति। प्रतिप्रस्थाता होतुरेकया च दशभिश्चेति श्रुत्वा द्विदेवत्यपात्राणि मार्जालीये प्रक्षाल्य निदधाति। अध्वर्युः प्रद्यावा यज्ञैः' इत्यादियावदाहावं अवसाने 'ओथामो दैव' इति प्रणवे च 'मदामो दैव' इति। 'तद्राधो अद्य' इत्यादियावदाहावं अवसाने प्रणवे च 'मदामो दैव' इति। शस्त्रान्ते तृतीयसवने'उक्थं वाचीन्द्राय' इत्याह। शस्त्रप्रायश्चित्तान्ते वैश्वदेव अदायाह— 'उक्थशा यज सोमस्य' इति। वषट्कृते च जुहोति। अयं वैश्वदेवग्रहप्रचारः।

४२२. चमसाननुप्रकम्पयन्ति। एतत् पात्रं नाराशंसा आवायन्ति। पूर्ववत् भक्षः।

**घृतयाज्यासम्पुटितसौम्यचरुयागः**— स्रुचां पद्धाच्चमससादनान्तरं प्रतिप्रस्थाता तूष्णीं समन्त्रकं वा शालामुखीये निरूप्य सौम्यं चरुं शृतमिदानीम-

भिघार्योद्वास्य सादयति—'यन्मे अग्ने इत्यादिमन्त्रेण यजमानेनाभिमन्त्रिते ऽध्वर्युर्होतारं पृच्छति—'पर्यक्ष्यसि सोम्या३म् न पर्यक्ष्यसी३' इति। सन्नं सौम्यमागत्य ध्रुवाज्याच्चतुर्गृहीत्वा ऽऽश्राव्याऽऽह—'घृतस्य यज' इति। वषट्कृते जुहोति। पुनरुपस्तीय द्विश्चरोरवदायाभिघार्य न प्रत्यनक्ति। पूर्ववदाश्राव्याऽऽह—'सौम्यस्य यज' इति। वषट्कृते प्राचीनावीत्याग्नेय्यां जुहोति। अयं घृतयाज्यासम्पुटितसौम्यचरुयागः।

४२३. मेक्षणानुप्रहरणान्ते पुनश्चतुर्गृहीतं गृहीत्वा ऽऽह—'घृतस्य यज' इति। पूर्ववज्जुहोति। अपर्यागेस्रुवा हुत्याभिजुहोति—'विष्णो त्वं न' इत्यृचा। ततश्चरुमध्ये गर्तं कृत्वा प्रभूतमाज्यं लौकिकमानीयोद्गातृव्यतिरिक्ताः स्वशरीरच्छायां तस्मिन्नवेक्षन्ते—'यन्मे सनः०मसि' इति।

**पात्नीवतग्रहणम्** चरुमुद्गातृभ्यो दत्वा प्राङायन्नाह—प्रतिप्रस्थातरुपांशुपात्रेण पात्नीवतमाग्रयणाद् ग्रहं मही०पदः' इति। प्रतिप्रस्थाता तथा गृह्णाति—'उप०सि बृहस्पतिसुतस्यत इन्द्रो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णा-ना३इ पत्नीवाः३' इति। बर्हिषी अन्तर्धाय घृतेन श्रीणाति—'अहं पुर०सनानाम्' इति। इदं पात्नीवतग्रहणम्।

४२४. बर्हिषी अपोद्धृत्य परिमृज्यानासादितमेवादायाऽऽह—'अग्नीन्नेष्टुरुपस्थमासीद,नेष्टः पत्नीमुदानय' उद्गात्रा सङ्ख्याप्याप उपप्रव०मान' इति। पूर्वद्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति—'भूत०यासम्' इति। चमसाध्वर्यवः सर्वेण सोमेन होतृचमसादींश्चमसान् अभ्युन्नीय सादयन्ति। होतृचमसेऽल्पमुन्नयन्ति। अध्वर्युः स्तोत्रोपाकरणादि कृत्वा सप्तहोतारं व्याचष्टे। नेष्टा पत्नीमुद्गात्रा लक्षयित्वा वाचयति—'विश्वस्य ते० ईडिताः' इति।

**पन्नेजनीजलस्रावणम्**—यदोद्गाता संज्ञां करोति तदा पत्नी ईषद्वस्त्रमपसार्योरुमूलात् पन्नेजनीः स्रावयति। इदं पन्नेजनीजलस्रावणम्।

४२५. **तृतीयसवनस्यशिष्टं कर्म**—आपोहिष्ठीयशंसनान्तमास्ते। अध्वर्युः 'स्वादुष्किलायम्' इति चतस्र उभयतोमोदं प्रतिगृणाति। तदीयाहावे 'मोदानो दैवोंशोंसामोदैव' इति। प्रतिप्रस्थाता 'तन्तु तन्वन्' इति श्रुत्वा ध्रुवं हस्ताभ्यां सुष्टु गृह्णाति—'द्यावा०मि' इति। स्थानाच्चालयति इति 'विश्वे० यन्तु' इति। आहरति—'दिवि०पार्थिवान्' इति। होतृचमसेऽवनयति—'ध्रुवं०रसन्' इति। अध्वर्युः पूर्ववद्धोतृचमसमादायाऽऽह—'उक्थ०सोमानां' इति पूर्ववज्जुहोति। चमसानपि पूर्ववच्चमसक्षणम। मन्त्रे **अग्निना**

**वैश्वानरेण मरुद्भिरित्यूहः** । आहवनीयस्योत्तरतः पूर्ववच्चमससादनम् । आशिरोपवेषनिरसनान्ते अध्वर्युः जुहोति—'जनस्य गोपा०शुचिः स्वाहा' इति । 'यन्म आत्मन' इत्यादि समानम् । सर्वेषु चमसेषु त्रींस्त्रीन् पूर्वाग्रन्थी-नेकैकं दर्भपिञ्जूलं च 'प्रशास्तः प्रसुहि' इति प्रेष्य 'प्रसर्पत' इत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति ।

अथ तृतीय सवनम् (पदार्थ संख्या ४११) इत्यारभ्यैतदन्तं कर्म तृतीय-सवनमुच्यते ।

४२६. **अग्निष्टोमसंज्ञा**—सङ्कल्पप्रभृति ( पदार्थ संख्या ४ ) सर्वं कर्म अग्निष्टोम इत्युच्यते ।

**समाप्तोयङ् ग्रन्थः शुभम्भूयात्**

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद-विषयक ग्रन्थ

१. **ऋग्वेदभाष्य**—(संस्कृत हिन्दी; ऋग्वेदादिभाष्यभूमिका सहित)—प्रतिभाग सहस्राधिक टिप्पणियां, १०-११ प्रकार के परिशिष्ट व सूची। प्रथम भाग ३५-००, द्वितीय भाग ३०-००, तृतीय भाग ३५-००।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत्त जिज्ञासु कृत विवरण। प्रथम भाग २०×३० अठपेजी आकार के ११००पृष्ठ सुन्दर पक्की जिल्द। मूल्य १००-००, द्वितीय भाग मूल्य ४०-००।

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्र-सूची-सहित। मूल्य ४०-००

४. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्याय कृत। ११-१३ काण्ड ३०-००; १४-१७ काण्ड २४-००; १८-१९ काण्ड २०-००; बीसवां काण्ड २०-००।

५. **ऋग्वेदादिभाष्य-भूमिका**—श्री पं० युधिष्ठिर मीमांसक द्वारा सम्पादित एवं शतशः टिप्पणियों से युक्त। मूल्य ३०-००

६. **ऋग्वेदादिभाष्य-भूमिका**—परिशिष्ट आक्षेपों का उत्तर। २-५०

७. **माध्यन्दिन (यजुर्वेद) पदपाठ**—शुद्ध संस्करण। २५-००

८. **गोपथ ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध और सुन्दर संस्करण। ४०-००

९. **ऋक्सर्वानुक्रमणी**—(कात्यायनमुनिकृत)—षड्गुरुशिष्य की समग्र-वृत्ति सहित प्रथम बार छप रही है। मूल्य······

१०. **ऋग्वेदानुक्रमणी**—वेङ्कटमाधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्याकार—श्री डा० विजयपाल जी विद्यावारिधि। उत्तम-संस्करण ३०-००; साधारण २०-००

११. **ऋग्वेद की ऋक्संख्या**—युधिष्ठिर मीमांसक मूल्य २-००

१२. **वैदिक-सिद्धान्त-मीमांसा**—यु० मी० लिखित वेदविषयक १७ लेखों का संग्रह। (द्वितीय-संस्करण शीघ्र छपेगा)

१३. **वैदिक-छन्दोमीमांसा**–युधिष्ठिर मीमांसक। नया संस्करण १५-००

१४. **वेदों का महत्त्व तथा उनके प्रचार के उपाय; वेदार्थ की विविध प्रक्रियाओं की ऐतिहासिक मीमांसा** (संस्कृत-हिन्दी) यु० मी०। ५-००

१५. **देवापि और शन्तनु के आख्यान का वास्तविक स्वरूप**—लेखक—श्री पं० ब्रह्मदत्त जी जिज्ञासु। मूल्य-१-००

१६. **वेद और निरुक्त**—श्री पं० ब्रह्मदत्त जी जिज्ञासु। २-००

१७. **निरुक्तकार और वेद में इतिहास**—,, ,, २-००

१८. **त्वाष्ट्री सरण्यू की वैदिक कथा का वास्तविक स्वरूप**—लेखक—श्री पं० धर्मदेव जी निरुक्ताचार्य। १-००

१९. **शिवशङ्करीय-लघुग्रन्थ पञ्चक**—इसमें श्री पं० शिवशङ्कर जी काव्यतीर्थ लिखित वेदविषयक **चतुर्दश-भुवन, वसिष्ठ-नन्दिनी, वैदिक-विज्ञान, वैदिक-सिद्धान्त और ईश्वरीय पुस्तक कौन**? नाम के पांच विशिष्ट निबन्ध हैं। ५-००

२०. **यजुर्वेद का स्वाध्याय तथा पशुयज्ञ समीक्षा**—लेखक—पं० विश्वनाथ जी वेदोपाध्याय। बढ़िया जिल्द २०-००, साधारण १६-००

२१. **वैदिक-पीयूष-धारा**—लेखक श्री देवेन्द्रकुमार जी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ पूर्वक विस्तृत व्याख्या, अन्त में भावपूर्ण गीतों से युक्त। उत्तम जिल्द १५-००; साधारण १०-००।

२२. **उरु-ज्योति**—डा० श्री वासुदेवशरण अग्रवाल लिखित वेदविषयक स्वाध्याय योग्य निबन्धों का संग्रह। सुन्दर छपाई पक्की जिल्द १६-००

२३. **ANTHOLOGY OF VEDIC HYMNS** - Swami Bhumananda Sarasvati. ५०-००

## कर्मकाण्ड-विषयक ग्रन्थ

२४. **बौधायन-श्रौत-सूत्रम्**—(दर्शपूर्णमास प्रकरण)—भवस्वामी तथा सायण कृत भाष्य सहित (संस्कृत) ५०-००

२५. **दर्शपूर्णमास-पद्धति**—पं० भीमसेन कृत, भाषार्थ सहित २५-००

२६. **कात्यायनगृह्यसूत्रम्**—(मूलमात्र) अनेक हस्तलेखों के आधार पर हमने इसे प्रथम बार छापा है। मूल्य २०-००

२७. **श्रौतपदार्थनिर्वचनम्**—(संस्कृत) श्रौत यज्ञों के पदार्थों का परिचय

देने वाला ग्रन्थ । विना जिल्द ३४-००; बढ़िया जिल्द सहित ४०-००

२८. **अग्निहोत्र से लेकर अश्वमेधान्त श्रौत यज्ञों का संक्षिप्त परिचय**—लेखक—यु० मी०, डा० विजयपाल विद्यावारिधि । मूल्य १०-००

२९. **संस्कार-विधि**—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट । मूल्य लागतमात्र १२-००, राज-संस्करण १५-०० । सस्ता संस्करण मूल्य ५-२५, अच्छा कागज सजिल्द ७-५० ।

३०. **संस्कारविधि-मण्डनम्**—संस्कारविधि की व्याख्या । लेखक—वैद्य श्री रामगोपाल जी शास्त्री । अजिल्द मूल्य १०-००, सजिल्द मूल्य १४-००

३१. **वैदिक-नित्यकर्म-विधि**-सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन के मन्त्रों की पदार्थ तथा भावार्थ व्याख्या सहित । यु०मी० ३-००सजिल्द५-००

३२. **वैदिक-नित्यकर्म-विधि**—(मूलमात्र) सन्ध्या तथा स्वस्तिवाचनादि बृहद् हवन के मन्त्रों सहित । मूल्य ०-७५

३३. **वेदोक्त-संस्कार प्रकाश**—पं० विट्ठल गावस्कर लिखित मराठी ग्रन्थ का भाषानुवाद । **शीघ्रछपेगा**

## शिक्षा-निरुक्त-व्याकरण-विषयक ग्रन्थ

३४. **वर्णोच्चारण-शिक्षा**—ऋषि दयानन्द कृत हिन्दी व्याख्या । ०-६०

३५. **शिक्षासूत्राणि**—आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र । ६-००

३६. **शिक्षाशास्त्रम्**—(संस्कृत) जगदीशाचार्य । ७-५०

३७. **अरबी-शिक्षाशास्त्रम्**—,, ,, ७-५०

३८. **निरुक्त-श्लोकवार्त्तिकम्**—केरलदेशीय नीलकण्ठ गार्ग्य विरचित । एक मात्र मलयालम लिपि में ताडपत्र पर लिखित दुर्लभ प्रति के आधार पर मुद्रित । आरम्भ में उपोद्घात रूप में निरुक्त-शास्त्र विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत) । सम्पादक—डा० विजयपाल विद्यावारिधि । उत्तम कागज, शुद्ध छपाई तथा सुन्दर जिल्द सहित । १००-००

३९. **निरुक्त-समुच्चय**—आचार्य वररुचि विरचित (संस्कृत) । सं०—युधिष्ठिर मीमांसक । मूल्य-१५-००

४०. **अष्टाध्यायी**—(मूल) शुद्ध संस्करण । मूल्य ३-००

४१. **अष्टाध्यायी-भाष्य**--(संस्कृत तथा हिन्दी) श्री पं० ब्रह्मदत्त जिज्ञासु कृत । प्रथम भाग २४-००, द्वितीय भाग २०-००, तृतीय भाग ३०-०० ।

४२. **धातुपाठ**—धात्वादिसूची सहित, सुन्दर शुद्ध संस्करण । ३-००

४३. **वामनीयं लिङ्गानुशासनम्**—स्वोपज्ञ व्याख्यासहितम् । ८-००

४४. **संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**—लेखक-श्री पं० ब्रह्मदत्त जिज्ञासु । प्रथम भाग १०-४०, द्वितीय भाग (यु०मी०) १०-०० ।

४५. The Tested Fasiest Method of Lea ning and Teaching Sanskrit (First Book)—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत '**विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**' भाग एक का अंग्रेजी अनुवाद है । अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है । कागज और छपाई सुन्दर, सजिल्द २५-०० ।

४६. **महाभाष्य** हिन्दी व्याख्या (द्वितीय अध्याय पर्यन्त) पं० यु०मी० । प्रथम भाग ५०-००, द्वितीयभाग २५-००, तृतीय भाग २५-०० ।

४७. **उणादिकोश**—ऋ० द० स० कृत व्याख्या, तथा प० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित । अजिल्द १०-००, सजिल्द १२-०० ।

४८. **दैवम् पुरुषकारवार्त्तिकोपेतम्**—लीलाशुक मुनि कृत । १०-००

४९. **भागवृत्तिसङ्कलनम्**—अष्टाध्यायी की प्राचीन वृत्ति । ६-००

५०. **काशकृत्स्न-धातु-व्याख्यानम्**-संस्कृत रूपान्तर । यु०मी० १५-००

५१. **काशकृत्स्न-व्याकरणम्**—सम्पादक यु० मी० । ६-००

५२. **शब्दरूपावली**—विना रटे शब्द रूपों का ज्ञान कराने वाली ३-००

५३. **संस्कृतधातुकोश**—पाणिनीय धातुओं का हिन्दी में अर्थ निर्देश । सम्पादक युधिष्ठिर मीमांसक । मूल्य १०-००

५४. **अष्टाध्यायी-शुक्लयजुःप्रातिशाख्ययोर्मतविमर्शः**—डा० विजयपाल विरचित पीएच० डी० का महत्त्वपूर्ण शोध-प्रवन्ध (संस्कृत) । सुन्दर छपाई उत्तम कागज बढ़िया जिल्द सहित । मूल्य ५०-००

५५. **वेदाङ्गसम्बद्ध मीमांसा** - यु० मी० लिखित वेदाङ्ग-सम्बन्धी शोधपूर्ण निवन्धों का संग्रह । (शीघ्रछपेगा)

## अध्यात्म-विषयक ग्रन्थ

५६. **तत्त्वमसि-अद्वैतमीमांसा**—स्वा० विद्यानन्द सरस्वती मूल्य ४०-००

५७. **ध्यानयोग-प्रकाश**—स्वामी दयानन्द सरस्वती के योग-विद्या के शिष्य स्वामी लक्ष्मणानन्द कृत । बढ़िया पक्की जिल्द, मूल्य १६-००

५८. **अनासक्तियोग**—लेखक—पं० जगन्नाथ पथिक । १५-००

५९. **आर्याभिविनय (हिन्दी)**—स्वामी दयानन्द । गुटका सजिल्द ४-००

६०. **Aryabhivinaya—English translation and notes** (स्वामी भूमानन्द) दोरङ्गी छपाई। अजिल्द ४-००,सजिल्द ६-००

६१. **विष्णुसहस्रनाम-स्तोत्रम् (सत्यभाष्य-सहितम्)**—श्री पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग)। प्रति भाग १५-००

६२. **श्रीमद्भगवद्-गीता-भाष्यम्**—श्री पं० तुलसीराम स्वामी ६-००

६३. **अगम्य पन्थ के यात्री को आत्मदर्शन**—चंचल बहिन। ३-००

## नीतिशास्त्र-इतिहास-विषयक ग्रन्थ

६४. **वाल्मीकि-रामायण**—श्री पं० अखिलानन्द जी कृत हिन्दी अनुवाद सहित। **अप्राप्य**। अरण्य-किष्किन्धा काण्ड १०-००, युद्ध काण्ड १०-५०।

६५. **शुक्रनीतिसार**—व्याख्याकार श्री स्वा० जगदीश्वरानन्द जी सरस्वती। विस्तृत विषय सूची तथा श्लोक-सूची सहित उत्तम कागज सुन्दर छपाई तथा जिल्द सहित। मूल्य ४५-००

६६. **विदुर-नीति**—युधिष्ठिर मीमांसक कृत प्रतिपद पदार्थ और व्याख्या सहित। बढ़िया कागज, पक्की सुन्दर जिल्द। मूल्य ३६-००

६७. **सत्याग्रह नीति-काव्य**—आ० स० सत्याग्रह १९३९ ई० में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित। हिन्दी सहित। ५-००

६८. **संस्कृत व्याकरण-शास्त्र का इतिहास**—युधिष्ठिर मीमांसक कृत। नया परिष्कृत परिवर्धित चतुर्थ-संस्करण तीनों भाग। १२५-००

६९. **संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि**—लेखक—डा० कपिलदेव शास्त्री एम० ए०। सजिल्द १५-००

७०. **ऋषि दयानन्द के पत्र और विज्ञापन**—इस वार इस में ऋषि दयानन्द के अनेक नये उपलब्ध पत्र और विज्ञापन संगृहीत किए गये हैं। इस वार यह संग्रह चार भागों में छपा हैं। प्रथम दो भागों में ऋ० द० के पत्र और विज्ञापन आदि संगृहीत हैं। तीसरे और चौथे भाग में विविध व्यक्तियों द्वारा ऋ० द० को भेजे गये पत्रों का संग्रह है। प्रथम भाग—३५-००, द्वितीय भाग ३५-००, तृतीय भाग ३५-००, चतुर्थ भाग ३५-००

७१. **विरजानन्द-प्रकाश**—लेखक—पं० भीमसेन शास्त्री एम० ए०। नया परिवर्धित और शुद्ध संस्करण। मूल्य ३-००

७२. **ऋषि दयानन्द सरस्वती का स्वलिखित और स्वकथित आत्मचरित**—सम्पादक पं० भगवद्दत्त। मूल्य ३-००

७३. **ऋषि दयानन्द और आर्यसमाज की संस्कृत-साहित्य को देन**— लेखक—डा० भवानीलाल भारतीय एम० ए०। सजिल्द १५-००

## दर्शन-आयुर्वेद विषयक ग्रन्थ

७४. **मीमांसा-शाबर-भाष्य**—आर्षमतविमर्शिनी हिन्दी व्याख्या सहित। व्याख्याकार—युधिष्ठिर मीमांसक। प्रथम भाग ४०-००; द्वितीय भाग ३०-००; तृतीय भाग ५०-००; चतुर्थ भाग ४०-००।

७५. **नाड़ी-तत्त्वदर्शनम्**—श्री पं० सत्यदेवजी वासिष्ठ। मूल्य ३०-००

७६. **षट्कर्मशास्त्रम्**—(संस्कृत) जगदीशाचार्य। अजिल्द ८-००

७७. **परमाणु-दर्शनम्**—(संस्कृत) जगदीशाचार्य। अजिल्द ८-००

## प्रकीर्ण ग्रन्थ

७८. **सत्यार्थप्रकाश**—(आर्यसमाज-शताब्दी-संस्करण)—१३ परिशिष्ट ३५-०० टिप्पणियां, तथा सन् १८७५ के प्रथम संस्करण के विशिष्ट उद्धरणों सहित। राजसंस्करण मूल्य ३५-००, साधारण संस्करण ३०-००।

७९. **दयानन्दीय लघुग्रन्थ-संग्रह**—१४ ग्रन्थ, सटिप्पण, अनेक परिशिष्टों और सूचियों के सहित। लागतमात्र २५-००

८०. **भागवत-खण्डनम्**—ऋ० द० की प्रथम कृति। अनु० युधिष्ठिर मीमांसक। मूल्य ३-००

८१. **ऋषि दयानन्द के शास्त्रार्थ और प्रवचन**—इस में पौराणिक विद्वानों तथा ईसाई मुसलमानों के साथ ऋषि दयानन्द के अत्यन्त प्रामाणिक एवं महत्त्वपूर्ण शास्त्रार्थ दिये गये हैं। अनन्तर पूना में सन् १८७५ तथा बम्बई में सन् १८८२ में दिए गए व्याख्यानों का संग्रह है। इस संस्करण से पूर्व के छपे पूना के व्याख्यानों में अनुवादकों ने मन माना घटाया-वढ़ाया है। **हमने सन् १८७५ में व्याख्यान काल में छपे हुए मूल मराठी भाषा में प्रकाशित ट्रैक्टों के अनुसार नया प्रामाणिक अनुवाद दिया है। बम्बई के २४ प्रवचनों का सारांश तो इसमें प्रथम वार प्रकाशित हुआ है।** साथ में ८-१० विशिष्ट परिशिष्ट दिये है। सुन्दर सुदृढ़ कागज, पूरे कपड़े की सुन्दर जिल्द, मूल्य ३०-००

८२. **दयानन्द-शास्त्रार्थ-संग्रह**—संख्या ८७ के ग्रन्थ से पृथक् स्वतन्त्र रूप से छपा है। सं० डा० भवानीलाल भारतीय। सस्ता संस्करण १०-००

८३. **दयानन्द-प्रवचन-संग्रह**—(पूना-बम्बई-प्रवचन)। पूर्ववत् स्वतन्त्र

रूप में छपा है। अनुवादक और सम्पादक पं०युधिष्ठिर मीमांसक। १०-००

८४. **ऋषि दयानन्द सरस्वती के ग्रन्थों का इतिहास**—लेखक—युधिष्ठिर मीमांसक। नया परिशोधित परिवर्धित संस्करण। मूल्य ४०-००

८५. **ऋषि दयानन्द और आर्यसमाज से सम्बद्ध कतिपय महत्त्वपूर्ण अभिलेख**—इसमें ऋ०द० के नये उपलब्ध पत्र, बम्बई आर्यसमाज के आदिम २८ नियमों की ऋ० द० कृत व्याख्या पं० गोपालराव हरि देशमुख लिखित दयानन्दचरित मराठी का हिन्दी रूपान्तर, आर्यसमाज काकड़वाड़ी बम्बई की पुरानी गुजराती में लिखित कार्यवाही (सन् १८८२ में जब ऋ० द० बम्बई में थे) का हिन्दी रूपान्तर आदि। मूल्य ८-००

८६. **अष्टोत्तरशतनाममालिका**—सत्यार्थप्रकाश के प्रथम समुल्लास की सुन्दर प्रामाणिक विस्तृत व्याख्या। लेखक पं० विद्यासागर शास्त्री। ६-००

८७. **कन्योपनयन-विधि**—अर्थात् 'कन्योपनयन-प्रतिषेध' ग्रंथ का खण्डन। श्री पं० महाराणीशंकर। अपने विषय की प्रामाणिक पुस्तक। ६-००

८८. **जगद्गुरु दयानन्द का संसार पर जादू**—श्री मेहता जैमिनि बी० ए० (स्व० विज्ञानानन्द सरस्वती)। ५८ वर्ष पश्चात् पुनः छपा। १-००

८९. **आर्य-मन्तव्य-प्रकाश**—महामहोपाध्याय पं० आर्यमुनि। प्रथम भाग ५-०० द्वितीय भाग ५-००।

९०. **दयानन्द-अङ्क**(वेदवाणी का विशेषांक)—इसमें ऋ०द० के जीवन से सम्बद्ध अभी तक अज्ञात और प्रकाशित विशिष्ट घटनाओं तथा ऋ० द० की यात्रा का विवरण तिथि संवत्, तारीख, वार, सन् सहित। १०-००

पुस्तक प्राप्ति स्थान—

# रामलाल कपूर ट्रस्ट

बहालगढ़, जिला—सोनीपत (हरयाणा) १३१०२१

रामलाल कपूर एण्ड संस, पेपर मर्चेण्ट, नई सड़क देहली।



